# अन्तर्दाहः

(सामाजिक उपन्यासः)

रचयिता प्रकाशकश्च

**डॉ० राम किशोर मिश्रः**

साहित्य-व्याकरणाचार्यः, एम्.ए., पी-एच्.डी.

संस्कृत-विभागाध्यक्षः

महामना-मालवीय-महाविद्यालयः

खेकड़ा-२०११०१ (मेरठ) उत्तरप्रदेशः



मूल्यम्-४०/-

प्रकाशनतिथिः

दीपावलिः २०५०

१३-११-१९९३

---

मुद्रकः- यमुनामुद्रणालयः, बागपत (मेरठ) उ.प्र. ।

# प्राक्कथनम्

यदाऽहं पञ्चपञ्चाशदधिकोनविंशशततमे १९५५ इतीशवीये वर्षे षोडशवर्षीय आसीत्तदा मे प्रेम कवितायामाविर्भूतम्। इदानीमहं लघुलघुकविता अलिखम्। कवित्वेन सह यदानीं कथाकार उपन्यासकारश्चापि भवितुमैच्छम्, तदानीं सुदायनामकं कथानकं विरचय्यैकमुपन्यासं रचयितुमारभे, यो वसुचन्द्रनभोलोचनसीमिते (२०१८) वैक्रमाब्दे फाल्गुने पूर्णिमायां तदनुसारमेकरसनिधीशाऽङ्किते (१९६१) इतीशवीये वर्षे मार्चमासे ३१ तमे दिनाङ्के एटाजनपदे सोरोंशूकरक्षेत्रे पूर्णतामगच्छत्, सोऽयमन्तर्दाहो नाम सामाजिक उपन्यासः।

यदाऽहमुपन्यासमलिखम्, तदा धनाभावेन तं प्रकाशयितुं नाऽशक्नवम्। एकवस्वङ्कचन्द्र १९८१ परिमितादीशवीयवर्षात्काव्यनाटककथोपन्यासादिविधासु रचिताः संस्कृतरचना मया क्रमशः प्रकाश्यन्ते। अतोऽधुनैषोऽपि प्रकाशितः। सम्प्रति कीदृशोऽयमुपन्यास इति विषयं पाठका एव निर्णेष्यन्ति।

ताभ्यां प्रेमिभ्यामेषोऽन्तर्दाहः तमर्पितः, ययोर्हृदययोर्दाम्पत्यार्थं प्रेमतरङ्गाः समुद्भवन्ति। प्रेमतरङ्गितानां जनानां मनोहरोऽयं स्यादित्याशासे।

—रामकिशोर मिश्रः।



# अन्तर्दाहः

## ( १ )

"कमले !" केनचिद् द्वारे शब्दः कृतः । "इयमायामि, आनन्द ! कक्षे तावदुपविश्यताम् ।" इति श्रुत्वा स आसन्द्यामुपविष्टः कक्षे तदागमनं प्रतीक्षितुमारेभे ।

"कोऽयम् ?"

"ममैवैष स सहपाठी, योऽस्य वर्षस्य शास्त्रिपरीक्षायाः सर्वप्रथमोऽस्ति छात्रः । अस्यैव तच्चित्रं भवत्या तदा 'दिव्यज्योतिः' – पत्रिकायां दृष्टम् ।" इति कथितवती स्वमातरं कमला ।

"परमत्र स कथमायातः ?

"यत्र तत्र पाठ्यपुस्तकेषु विषमस्थलेषु किञ्चित् परिप्रष्टुम्, तं तं विषयं संगृह्य तत्र हि विचारयितुं वा" इति निवेद्य "इयमायामि" इत्युक्त्वा सा नीचैरतिथि-कक्षं गता ।

स्वीकृतिं दत्वा यावन्नागता सा, तावत् स दक्षिणकपोले संलग्नहस्तः, "आगमिष्यति न वा" इति विचारमग्नः, "अद्य सम्प्रति नावकाशः, गम्यतां पुनः कदापि यथासमयं मेलिष्यामि" इति सा न कथयेत्, इत्थं सम्यक् पर्यालोचयन् आनन्दः क्षणं चित्रवत् स्तम्भित एवाऽभवत् । परञ्चाग्रे समागतां कमलां प्रेक्ष्य, "एहि, एहि, उपविश, उपविश, चतुष्पादिकामिमामलङ्कुर्याः" इति स निजगाद ।

कमलापि चतुष्पादिकायामुपविष्टा । ततः "केन पृष्टासि ?" इत्थमानन्दोक्तं निशम्य, "कोऽयम् ?" कमले ! ···"कथमत्र स आयातः ?" इति जनन्या पृष्टाप्यहं 'निरवकाशा विधयः सावकाशान् विधीन् बाधन्ते' इति मनसि कृत्वा येन केनोपायेन पूर्वमिहैवागतास्मि ।" इति तया निवेदितम् ।

"प्रियं मे कृतं प्रिये !"

"प्रिय ! तदानीं मातुस्ते ते प्रश्ना मे नितरामन्तरदाहयन् । परं किं कुर्याम् ? नाहं सबला । इतो भवानपि प्रसीदतु, उतः सापि रुष्टा न भवेत्; इति द्विविधमपि कार्यं मे करणीयमस्ति । तं विषयं कोऽपि नावगच्छेत्, इति मे प्रार्थना देव !" इति शङ्कमाना साऽवोचत् ।

"कं विषयम् ?"

"तदेव. यदद्य भवता मे पाणिं गृहीत्वा सहर्षमुद्याने समाचरितम् ।" इति साऽधोमुखी वभूव ।

"कथमित्थं शङ्कसे मयि ! कथय, भ्रमणाय किं चलिष्यसि ? अद्य मे पितरावपि तत्र गङ्गातटे परिवारेण सह भ्रमणार्थं सम्प्रति गन्तारौ, अतो यदि भवत्या अपि तत्रोपस्थितिः भंवेत्, इति कामये ।"

नहि, नहि, सम्प्रति मे भ्रातुरागमनकालः ।"

"अस्तु, विद्यालयोद्याने ते सम्यङ् मेलनं भविष्यत्येव किम् ?

"तदपि समयं वीक्ष्य, यथावत् ।"

"अस्तु, वरम्" इति निगद्य सहसा स उत्थाय कक्षान्निर्गतः । परं कमलया पुनरपि किञ्चिदुक्तम्—

श्रूयतां, श्रूयतां, भवद्भिरेवंविधे काले भ्रातुरनुपस्थितावेव आगन्तव्यं यदा कदा, नमस्ते ।

"नमस्ते ।"

   




## ( २ )

लालापतिः कमलायाः पिता 'द्विवेदि'—पदविभूषितो धनेन 'लक्षपति'रिति नाम्ना प्रसिद्धः। बालकाले मुखाल्लालाया अप्रतिहतवेगेन जलस्येव प्रपातेन तस्य मात्रा वात्सल्यात् 'लालापति'रिति नामधेयं कृतम्। वस्तुतो नाम चन्द्रसहाय इत्यासीत्, परं केऽपि लालापतिरिति, अन्ये द्विवेदीति, अपरे लक्षपतिरित्येवं जना व्यवहरन्ति। निकटसम्बन्धिनो विहाय केऽपि न जानन्ति तस्य चन्द्रसहाय इति नाम। इयान् धनराशिस्तेनार्जितो वार्धुषितया यत्सम्प्रति कुसीदेन रुप्याणि वितीर्यन्ते। अस्य चत्वारः पुत्राः, तिस्रश्च पुत्र्योऽभवन्, किन्तु द्वे एव तेषु सन्ताने अवशिष्टे, पुत्रीषु कमला पुत्रेषु च सुरेशः। अतोऽस्य सन्तानशोकेनाऽन्तर्दहति स्म हृदयम्। ईश्वरेच्छा बलीयसी, न कोऽपि पारं याति।

"द्विवेदिन्!" इति केनचिदुच्चैरुच्चरितम्। "कस्कः?" इति कथयन् सोपानमार्गेण सोऽट्टालिकातो नीचैरागतोऽपश्यत्—'कोऽपि कृशदेहः कम्पितावयवो वृद्धो जनः सदनस्य द्वारेऽतिष्ठदिति'।

"किं त्वं हीरोऽसि?" इति लालापतिरकथयत्।

"आमेवम्!" इति स हीरो जगाद।

"किमर्थमागतोऽसि?"

' रूप्यकैकमाकांक्षामि।"

"उपनिधिं न्यस्तुं किमानीतवानसि?"

"नहि, नहि, द्विवेदिनः! सम्प्रति ममाग्रे न किञ्चिदस्ति। पञ्चपुत्रा आसन्, ते सर्वे शनैः शनैर्मृत्युं प्राप्ताः। चतसृषु कन्यास्ववशिष्टैका-साप्यस्तीदानीं मृत्युसन्निकटा। सम्प्रति चेन्न म्रियेत सा, तस्या एवोपचारार्थं भवत्सकाशमायातोऽस्मि। ज्वरस्तु तस्याः स्वचरमदशामुपगतः। आजीवनं भवतामस्योपकारस्य ऋणी भविष्यामि, किं बहुना?" इति स करबद्धो न्यवेदयत्।

"कमले ! ए कमले ! रूप्यकैकं मातुः सकाशाद् गृहीत्वाऽस्य हीरकस्य पितृव्यस्य प्रदेहि । श्रूयतां भोः ! ......, मासान्ते वर्धमानैकरूप्येण सह ग्रहीष्यामि ।"

"इयती धनवृद्धि र्न गृह्यताम्, अस्या एव प्रभावः, यदहमद्य निस्सन्तानोऽभूवं सहैव धनहीनोऽपि । भवन्तस्तु जानन्त्येव, किमधिकमहं कथयेयम् ?" इत्युच्चैर्वदन् स निष्क्रान्तः ।

लालापतिश्च 'यद् भविष्यति तदहं द्रक्ष्यामि' इत्युक्त्वा पुनरट्टालिकां गतवान् ।

   

( ३ )

तैलरथमारूढः सुरेशो विश्वविद्यालयाद् गृहमायातः । सोऽयं तत्र व्याकरणविभागाध्यक्षः । विश्वविद्यालयोऽयं विद्यावाचस्पतिरित्युपाधिभाजा महामनसा श्रीमता डॉ० रामकिशोरमिश्रेण शूकरक्षेत्र-संस्कृत-विश्वविद्यालय इति नाम्ना स्वकीये पश्चिमे वयसि स्थापितः, सम्प्रति गङ्गारथ्यायां पूर्वस्यां दिशि विद्यते । मिश्रमहाभाग एव तत्रास्ति कुलपतिः प्रथमः । सुरेशश्च तन्मातुलात्मजः 'शास्त्री' इत्युपनाम्ना प्रसिद्धः, शूकरक्षेत्रे 'रामसिंहपुर' प्रतिवेशे 'स्वस्तिक'–सदने सपरिवारो वसति । शूकरक्षेत्रमिदम्, उत्तरप्रदेशे 'एटा' जनपदान्तर्गतं विद्यते 'सोरों' इत्युपनाम्ना प्रसिद्धम् ।

पङ्क्तिमार्गेणोपरि गत्वा सुरेशोऽपश्यद् यत् तस्य भगिनी कमला भोजनपाके मात्रे साहाय्यं प्रददती तिष्ठति । स्वकीयं भ्रातरमागतमवलोक्य सा प्रसन्नचित्ताऽभूत्, पुनरित्थमब्रवीच्च तम्—"कियान् भागोऽद्यावधि लघुशब्देन्दुशेखरस्याऽध्यापितो भ्रातः !"

"हलन्तस्त्रीलिङ्गान्तो भागोऽध्यापितः, कमले ! अधुना तु परीक्षायै मासद्वयमवशिष्टमेव, तावत्सर्वमध्यापयेयुः प्राध्यापकाः इत्यहमाशासे भगिनि !"

"उचितमेवैवम् । ममापि परिकरावध्यन्तः पाठः समाप्तिं गतो भ्रातः !"

"किं त्वया 'काव्यप्रकाशे त्वधमकाव्यस्य षष्ठोल्लासे पुनर्निरूपणस्य कोऽभिप्रायो मम्मटाचार्यस्य' इति प्रश्नः सम्यक्तया बुद्धः ? कमले !"

"आं भ्रातः !"

"अस्तु, तावदायाहि कमले ! भोजनं करिष्यावः, ततो वार्तामालपिष्यावः ।" इति तौ महानसकक्षं प्रविष्टवन्तौ ।

   

(४)

"अद्य कविसम्मेलने कमले ! कस्य कवेः काव्यं विशेषतस्तुभ्यमरोचत ? इति कथयस्व ।" इति सुरेशेन भोजनाऽन्ते, स्वीयासु शय्यासूपविष्टानां सर्वेषां गृहसदस्यानां सम्मुखं प्रतिदिनमिव शास्त्रार्थरीत्या प्रश्नः कृतः ।

"तस्यैव आनन्दस्य आधुनिकं नव्यगीतम् ।" इति कमलया प्रसन्नमनसा तदुत्तरितम् ।

"आम्, आनन्दस्तु किशोर इत्युपनाम्ना कवयति, नैव कवते; किन्तु काव्यं तु श्रीरामचन्द्रत्रिवेदिन एवास्ति सुन्दरम् ।" इति कथितं सुरेशेन तत्रोदासीनतां प्रकटयतेव ।

"नहि, नहि, भ्रातः ! रामचन्द्रस्य तु साधारणी सा कविता, या नैव किञ्चिदपि परिवर्तनमाददती प्राचीनपरिपाट्यनुगामिनी; परं यत् किञ्चित् तत्र वैशिष्ट्यं, तत् किं नैव मन्तव्यम् ? साम्प्रतिककालस्तु परिवर्तनमीहते । 'तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति' इति सिद्धान्तं मन्यमाना एव जनाः संस्कृतस्योन्नतये कटिबद्धास्तस्य च क्षेत्रं विस्तारयितुमभिलषन्ति, ते सिद्धान्तमेनं न मन्यन्ते । तेषां कृते साम्प्रतिकप्रभावं लक्ष्यीकृत्य तत्र परिवर्तनमनिवार्यं भवति, तत्रापि केऽपि समर्थका मिलन्ति केऽपि च विरोधिनः । यतो हि— 'भिन्नरुचि र्लोकः' ।"

'उक्तं तु युक्तं त्वया कमले ! किन्तु न कापि तत्र मौलिकता। तेन तु डॉ० निर्भयस्य हिन्दीगीतमनुसृत्य तत्सर्वं लिखितम्। परं 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन विरोधित्वात् तत्समाजो नाद्रियते।"

"अद्य समाजस्तन्नाद्रियते परमग्रे भविष्यत्काले तत्सर्वमयमेव समाजः स्वशिरसि धृत्वा गमिष्यति, उद्घोषयिष्यति च— 'सोऽयं कविः किशोरो नव्यगीतप्रणालीप्रवर्तकः, श्रेष्ठो मान्यश्च, संस्कृते स्वसाहित्यस्य प्रदानेन या क्षतिपूर्तिः कृताऽनेन तदर्थमहमृणी' इति मूलतत्त्वं नव्यगीतेष्वन्तर्हितम्। यद्यपि तेन हिन्दीगीतानामनुसरण कृतं, तथापि तत्र तेषामपेक्षया मौलिकता भृशमास्ते। परं सम्प्रति तस्य ऋणं न कोऽपि स्वीकुरुते, तस्यात्र न दोषः। यतो हि— 'मुण्डे मुण्डे मतिर्भिन्ना' भ्रातः !"

"अस्तु तावत्, स्यादेवम्।"

"इयमुपेक्षावृत्तिर्भवतामीर्ष्या भ्रातः !"

"कथमेषा कमले !"

"यद् भवद्भिः सत्यता नापेक्ष्यते।"

"कोऽयं नव्यगीतलेखकः ? यस्य विषयमुद्दिश्य भवतो वार्तालापोऽभूत्" इति कमलायाः पिताऽवादीत्।

"स एवाऽऽनन्दः, भवतां मित्रस्य तनयः।" इति सुरेशोऽकथयत्।

"किन्तु कमलायास्तु तेन सह सर्वदा विरोधिता वर्तते सहपाठिप्रतियोगितया, तत्कथमत्राऽधुना विचाराणां समागमः सुरेश ?" इति पितुर्वचनं निशम्य मध्ये कमलया कथितम्—

प्रतियोगि–विरोधिता तु भवत्येव। परं तेन साहित्ये यादृशं कार्यं सम्पादितं, येन श्रद्धायास्तत्र सम्भवः प्राकृतिक एव। संस्कृते नव्यगीतप्रदानं तस्य प्रतिभाशाली मानवीयो गुणः। तमवलोक्य येऽन्तर्दहन्ति ते किं मानवाः ? मानवास्तु ते सन्ति, ये स्वशत्रुष्वपि किमपि मानवीयवैशिष्ट्यं दृष्ट्वा तत्सर्वात्मना स्वीकुर्वन्ति, यत्र तत्र च प्रशंसितुमपि नाऽवरुन्धन्ति।

को नाम सहृदयो भवेद् यस्तस्यैनां काव्यस्य नव्यप्रणालीं वीक्ष्य कदापि प्रभावितो न स्यात् । प्रतियोगिता तु स्वस्थाने भवति, नैव सर्वत्र ।"

"भवतु, भवतु नाम !" इति लालापतिरचकथत् ।

"कथयस्व कमले ! तव विभागे कः कार्यक्रमः श्वः ?" इति सुरेशेन पुनः पृष्टम् ।

"उपाधिवितरणानन्तरं श्वः, आनन्देन सह मम सङ्गीतस्य कार्यक्रमो भ्रातः ! तत्राऽऽगत्य तदा श्रूयतां तद्विरचितमेकं नव्यगीतम् ।" इति कमला सहर्षं निवेदितवती ।

"किम् ? आनन्देन सह तव सङ्गीतम् !"

"आं भ्रातः !"

"वरं, तच्छ्रोतुमागमिष्यामि कमले !"

"अस्तु, बहुवार्तालापेनाऽलम्" इति मातुर्वचनं निशम्य सुरेशस्तु तूष्णीं भूतः । कमला सा घटिकायां रात्रौ सार्धदशवादनकालमवेक्ष्य प्रातश्चतुर्वादनसमयसङ्केतं दत्वा शयने स्वात्मानं निपात्य, ऊर्ध्वानना सती क्षणं तस्थौ सुप्ता च ।

   

## (५)

लालापतेः सदनाद् यदा स आनन्दश्चलितस्तदा तन्मनसि विषयस्याऽस्याऽपारहर्षोऽभूद् यदद्य स्वप्रतिद्वन्द्विनं जनमेकं स्वानुकूलं विधाय विद्यया स पराजितवान् । या व्यक्तिस्तेन सह कदापि वार्तामालपितुमपि नोद्यताऽभवत्, साऽद्य तन्नव्यगीतानि श्रुत्वा तत्सविधे स्वधन्यवादानर्पयन्ती तद्विषयिकीमितस्ततः प्रशंसामपि कर्तुमारभत । तया साकं विद्यालये तस्य प्रायेण बहुसमयो व्यतीतः । इदमेव कारणमभूत् तत्र तस्य गमनस्य, यद्यपि स्वगृहं तं सह नेतुं साऽऽग्रहमप्यकुरुत; किन्तु 'हस्तमपि गृहीत्वा मणिबन्धमपि स

गृह्णाति' इति लोकोक्त्या स तं समयं कथं दूरीकर्तुमलमासीत् ? अद्य तस्याऽऽदरं यादृशं कमला कृतवती, तादृशी न कदाप्याशाऽऽसीत्तच्चेतसि । 'लभेत वा प्रार्थयिता न वा श्रियं, श्रिया दुरापः कथमीप्सितो भवेत् ?' इति महाकविकालिदासोक्तौ सोऽद्य सार्थकतामवालोकयत्, परमस्मिन् सिद्धान्ते कमलायाः विजयोऽन्तर्हितः । अस्य महदाश्चर्यमभूत्तस्य हृदये, यत्स तं सिद्धान्तमद्य कथमङ्गीचकार ? तद्गतावद्य वेगस्य स्फूर्तेश्च कारणमस्ति तस्य यौवनारम्भः। इदमेव कारणं कमलायास्तं प्रति प्रभावजनकम् । 'कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने' इति पंक्तिरत्र द्वयोरपि स्मृतिपथमायाति पुनः पुनः स्वसार्थकतां बोधयितुम् । अथ भवतां सम्यक् ज्ञातमस्ति, यत्तावद्य तारुण्ये परस्परमनुरक्तावभूताम् ।

मार्गे रमेशो मिलितः । रमेश आनन्दस्य परममित्रमस्ति, परं कमलायाश्चिराभिलाषी । मित्रमवेक्षमाणेन प्रसन्नचित्तेन तेन कथितम् —

"मित्र ! क्व गतः साम्प्रतम् ?"

(विहस्य) "न कुत्रापि मित्र ! क्षणं कमलाया गृहं गतवानासम् ।"

(साश्चर्यम्) "किं कमलाया गृहम् ?"

(सहर्षम्) "आं मित्र !"

आमिति श्रुत्वा ज्वरग्रस्त इव संजातो रमेशः । स कमलामात्मना कामयते । विचारयति च — 'यदि कमलया सह तस्य विवाहो भवेत्तदा स गङ्गायां सपादरूप्यैकस्य दुग्धधारां प्रवाहयेत् ।' इति तेन आनन्दस्य वार्तया शङ्कितहृदयेन सरोषं पुनः किञ्चिदुक्तम्—

"किं सा विमला मृता ? आनन्द !"

"विमलया मे किं प्रयोजनं रमेश ! सा तु मामीक्षतेऽपि न, त्वामेव कामयते ।"

"परमहं तु कमलां ......... कामये, सापि मया सह सम्यक् वार्तामालपति सन्तोषप्रदां पुनस्तत्र कथं भवदीयः प्रभावः ?"

"यदि कमला भवन्तमीहते तदहं त्वां तु नावरुन्धे। परमित्थं स्पष्टतया वच्मि यदेवंविधमाचरणं तस्या नाग्रे भविष्यति त्वया सह।" इति आनन्देन विनम्रतया निगदितम्।

"भवतु नाम, स्यादेवं पश्यामि। यथेच्छं गच्छ मित्र! स्वानुकूलमाचर। स्वेन मित्रेणैव सार्धमित्थं सद् व्यवहर यथासमयं पुनः सम्मिल। शुभास्ते पन्थानः सन्तु।" इत्थमुक्त्वा सभ्रूभङ्गं सरोषं द्रुतगत्या रमेशो गतः। आनन्दश्च तस्य तामवस्थां पश्यंस्तत्रैव क्षणं स्तम्भ इव तस्थौ।

   

(६)

अद्य रमेश आनन्दस्य चिरमैत्रीव्यवच्छेदाय संकल्पं दृढीकृतवान्। "यो मित्रं मित्रशब्दस्य व्युत्पत्तिं न जानाति, जानाति चापि परं सम्यग् व्यवहारेण तदनुसारं न पालयति, स किं मित्रम्? नैव, नैव।" इत्थं तन्मनसि विचारप्रवृत्तिरजायत। यदाऽऽशातीतमानन्दवचसा तदन्तर्दग्धं, तत्स कदापि किं विस्मर्तुमर्हति? कमलायाः गृहं स श्वोऽवश्यमेव प्रातर्गमिष्यति, तदैव विज्ञास्यति यदानन्दवचने कियती सत्यता? "यदि सत्यता भवेत् तर्हि मित्रताविच्छेद एवाऽभूत्, नो चेत्तस्य सोत्प्रासं, किन्तु तदवगतौ मदीय एव प्रमादः, यदहं तद्वचनेनैव विपरीतबुद्धिरभवम्" इत्थं स विचारयन्नगमत्।

आनन्दस्तु स्त्रीरत्नस्य प्राप्तौ, तत्रापि मनोऽभीप्सितायाः कमलाया अनुरक्तौ, यदि मित्रताच्छेदोऽपि भवेत् स तं वरमेव मन्यते। कमलया सह सम्भाषणे स आशातीतं साफल्यं प्राप्तवान्। तेन सहर्षस्वान्तः स रमेशं प्रति पृष्ठतः सिंह इवाऽवलोकयन् निशान्तं ययौ।

ततो भोजनान्ते शयनागारं प्रविश्यैकान्ते स शय्यायां पतितः सन्, कमलाया आकृतिं मनसा हृदि धारयन्, काव्यप्रकाशस्य प्रतिपत्रं तस्या हसन्तीं मधुरच्छविं सहैव सम्भाषमाणामिव पश्यन्, कदाचिदभिमुख शर्वरीसखीं द्वितीयां तामुपस्थितामिवावलोकयन्, कदाचिल्लतामण्डपे प्रवेशाय तद्द्वारे

चात्मना स्वसखीं प्रतिहारीपदे निवेश्य निजं प्रति किमपि तत्र सङ्केतयन्तीमिव तां हृदयस्वामिनीं कोमलकराभ्यां पादौ सुखयन्तीमिव साक्षात् प्रपश्यन् प्रसन्नमना सुप्तः। रात्रिश्च प्रायस्तदानीं स्वप्रियतमेन शशिना सह सपादद्वादशवादनसमयं सानन्दं कालं यापितवती।

रमेशोऽपि तदा प्रातर्विगतनिद्रः शयने पतितः स्ववक्षसि संलग्नहस्तो विचारमग्न ऊर्ध्वाननः पूर्वदिङ्मुखः स्वकक्ष्याया गवाक्षमार्गेण प्राकृतिकदृश्यमालोकमानः सम्मुखमेव कपोतमिथुनात् — "कपोतीं प्रति, तां स्वं प्रत्याक्रष्टुमपरं गुञ्जन्तं पारावतं दृष्ट्वा, कपोतीपतिः कपोतस्तं बलात् चञ्चुना मुहुर्मुहुस्ताडयन् भर्त्सयति कथयतीव— 'पूर्वमियं भावत्की प्रेमिकासीत् परं मध्ये मया स्वगुञ्जनेन यदा स्व प्रत्याकृष्टा, ततः परं त्वां प्रति मुखं कृत्वापि न पश्यति, तावकीनञ्चाद्यतनममुं स्वेच्छारहितं गुञ्जनरूप दुर्व्यवहारं विलोक्य न कदापि विस्मृत्यापि त्वया सह वार्तामाचरिष्यति। त्वमवहितो भव सम्प्रति, इतः परं यदि त्वदीयो दुराग्रहः पुनर्नेत्रगोचरतां गतः, तदाऽहं त्वां शताधिकतीक्ष्णचञ्चुप्रहारेण ताडयिष्यामितमाम्। गच्छ, गच्छ, काञ्चिदपरां पश्य, नेयमधुना योग्या ते, पूर्वं कथमुपेक्षिता ? मयाऽस्याः पाणिगृहीतः। अतोऽहमेवाऽऽजीवनमनया सह विहरिष्ये, नाऽन्यः कश्चित्" इत्युपदेशमग्रहीत्।

तथापि तेन न विश्वस्तम्। अद्य नूनमेव तेन गमिष्यते तद्गेह इति निश्चितम्, पर सूर्यसमुदयो हि मेघाच्छन्नतया सम्यङ् न ज्ञातः। रात्रावद्य सम्यक् स सुप्तोऽपि नासीत्। शीतलो मन्दसुगन्धः पवनो नैसर्गिकसङ्गीतकृतां विहङ्गमानां मधुरकलरवेन गुञ्जित इव प्रावहत्। घटिकायां टन्निति शब्दं निशम्य रमेशेन तां प्रति शीघ्रतया स्वमुखं परिवर्तितम्। तत्राऽष्टघण्टितकालं दृष्ट्वा, शीघ्रमेव शयनीयं परित्यज्य, हस्तमुखप्रक्षालनं विधाय, प्रातराशं कृत्वा, द्विचक्रिकामारुह्य तेन तदा कमलायाः सदनमार्गो गृहीतः।

   

(७)

कमला प्रातरुत्थाय, भ्रात्रा सह तैलरथमारुह्य, तीर्थेशभवनं प्राप्य, ततः पश्चाद् आनन्दं स्वसहचरं कृत्वा गङ्गास्नानाय गता। मार्गे द्वयोरपि वार्तालापः प्रत्यक्षतो न भूतः। सुरेशस्तत्राऽवरोधकोऽभूत् परमन्तर्हृदयं द्वयोरपि सहचरतया प्रसन्नमासीत्। सुरेशो मध्ये तौ च तस्मादितस्ततो ह्यक्रमेणोपविष्टौ यथासमयं पारस्परिकवार्तालापेन प्रमुदितमानसौ गङ्गातीरं प्राप्तौ। भागीरथीधारा तीव्रवेगेन कलकलं शब्दायमाना, नानाप्रदेशेभ्यस्तत्र समागतानां स्नातानां यात्रिणां दुष्कृतानि प्रक्षालयन्तीव प्रवहति स्म। यात्रिषु विशेषतो मध्यप्रदेशीयाः, राजस्थानीया गुर्जरप्रदेशीयाश्चासन्। तेषां शूकरक्षेत्रमिदं गङ्गातीर्थम्। अतः श्रद्धया गङ्गाजलेन पात्राणि पूरयित्वा केऽपि बहुविधं स्तुवन्तिस्म, केऽपि च प्रस्नाय गङ्गा–जलानि पात्रेषु गृह्णन्तिस्म। एतादृशं गङ्गाया रमणीयं मनोहरं च दृश्यमवलोकयन्तस्ते गङ्गामस्नासिषुः।

तदनन्तरमानन्देन किमपि मनसा विचार्य गङ्गायां रूप्यैकस्य दुग्धधारा प्रवाहिता। तस्याद्य मनो विशेषतः प्रसन्नमभवद् धनराशिं प्राप्तस्य निधनस्येव। पुनर्द्वयोः सुरेशस्य कमलायाश्च मध्ये स स्थित्वा तयोः स्वरेण स्वस्वरध्वनिं सम्मेल्यानन्दो जाह्नवीस्तुतिरूपां गङ्गालहरीमपठत्। ततस्तत्रैव सिकतायां क्षणं विरम्य ते प्रातराशं कृत्वा स्वनगरमार्गमग्रहीषुः। तदानीमानन्दस्य वामतः कमला, दक्षिणतश्च सुरेश उपाविशताम्। तैलरथो यदा स्वस्तिकसदनस्य नीचैरागतः, तदा ततो निवर्तमानो मनोहतो रमेशो द्विचक्ररथारूढः प्रच्छन्नमार्गेण कमलानन्दयोर्दृष्टिपथमायातः।

"कुत्र गम्यते श्रीमन्!" तैलरथादवतीर्य कमला रमेशं पृष्टवती।

"न कुत्रापि, विद्यालयं गच्छामि।" इति रमेशः कमज्ञामुदतीतरत्।

"किमावां तत्र नैव गमिष्यावः? क्षणं तावद् विरम्य सहैव

गम्यताम् ।" इति विनम्रतया तदनभिलषन्त्यापि कमलया निगदितम् ।

"नहि, नहि भवन्तौ सार्धमागच्छेताम् व्यतीतःसार्धनवघण्टित-कालः, तावदहं गच्छामि ।" इति कथयन् हृतचेता रमेशस्ततो जगाम ।

रमेशं गच्छन्तमवलोक्य स आनन्दः स्वात्मानमतिप्रसन्नमद्राक्षीत् । परमिदं स नावगच्छति स्म यदस्मिन् समये हृदये योऽलौकिकानन्दो हि वर्तते, तस्य स्थाने कदाऽप्यर्हति भवितुमन्तर्दाहोऽपि । तेन निरन्तरं सुखमेव दृष्टं, भविष्ये कदापि दुःखमागामि न वेति नावगम्यते । अद्य ऽयं प्रेमपथः सुखदो भवन्नग्रे दुःखदो भविष्यतीत्यस्य ज्ञानं तस्मिन् किञ्चिन्मात्रमपि नासीत् । "कार्यमनुभवन् कार्यी निमित्ततया नाश्रीयते' इति रमेशेनाद्य विज्ञातम् । "यावद् दुःखमस्ति सम्प्रति मे हृदये, कदापीयदेव सुखमप्यासीदनयैव कमलया सह । यद् आनन्देन मया सह शत्रुवदाचरितं, तस्य फलं 'शठे शाठ्यं समाचरेत्' इति न्यायेनाऽवश्यमेव दास्ये । तं नाऽनया सार्धं सुखिनमवलोकयितुं क्षमे ।" इत्थं विश्वविद्यालय-मार्गे द्विचक्रिकामारूढस्य तस्य रमेशस्य मनसि नानाविधा विचारा गतागतमकार्षुः ।

सोपानमार्गेण कमलाया उपरि गमनानन्तरं "वत्से ! रमेश आगच्छत् त्वां विद्यालयं गन्तुमाह्वयितुम् । मया कथितः सः --'यदद्य सा भ्रात्रा सह 'आनन्दं' गृहीत्वा गङ्गास्नानाय प्रातरेव गता, तदियमागच्छति, परं नैवाऽस्थात्, एष एव गतः रुः ।" इति कमलाया जननी पद्मा सप्रेम न्यगादीत् ।

"गतस्तर्हि गतः स्यात् स मातः! अहमपीयं गच्छामि भोजनं कृत्वा सहपाठिना आनन्देन सह भ्रातुस्तैलरथमारूढा ।" इति सहर्षं निगदितवती कमला ।

"किं भोजनं सुसम्पन्नं भ्रातृजाये ।"

"आम्, सर्वे गङ्गां स्नात्वा समागताः किम् ?"

शिरः कम्पेनैव स्वीकृतिं दत्वा, भ्रात्रा सह आनन्दमाहूय, द्वावपि

भोजयित्वा, स्वयञ्च किञ्चिद् भुक्त्वा स्वकक्षं विश्वविद्यालयवेषं परिधातुं गता।

आनन्देन प्रथममेवात्र किञ्चिद् भुक्तम्। तेन कतिवारमेव स्वपित्रा सहाऽऽगामि, परं कस्मिन्नपि दिने नाऽभोजि किमपि। पूर्वं कमलया सह तस्य विद्यया पारस्परिको विरोध आसीत्, किन्त्वद्य तत्स्थानं प्रेम्णा गृहीतम्। कमलाया आग्रहेण तेनाऽद्य भोजने न कश्चिद् विरोधोऽकारि। आग्रहवशादेव स्वगृहमपि नाऽगामि। तत्रैव सुरेशेन सह चूर्णकुन्तलोपेतान् काकपक्षान् सज्जीकृत्य, दर्पणे मुखस्य प्रतिबिम्बं दृष्ट्वा तेन विश्वविद्यालयवेषः परिहितः। ततः कक्षान्निष्क्रम्य सुरेशेनाऽवादि —

"किं करोषि कमले! सपादद्शवादनकालो व्यतीतः। अहञ्चानन्देन सह तैलरथं प्रतिगच्छामि। शीघ्रमेहि, विलम्बो न भवेत्।"

"इयमागच्छामि भ्रातः! क्षणं तावद् विरम्यताम्।" इत्थमुच्चचार मुकुरमभिमुख स्थापयित्वा भ्रमरकयुतान् शिखण्डकान् कङ्कतिकया प्रसाधयन्ती कमला।

   

## (८)

सुरेशस्तु तैलरथादवतीर्य स्वविभागकक्षं गतः। आनन्देन कमलया च प्रथमं स्वं स्वं शास्त्रिपदवीप्रमाणपत्रं गृहीतम्। तत्र रमेशो विमला च द्वावपि तयो दृक्पथमायातौ। रमेशस्तु खिन्नमनाः परन्तु विमला रमेशस्य कमलायां तन्मुखादेव विरक्तता श्रुत्वा खिन्नतां चालोक्य प्रसन्नचित्ताऽऽसीत्। सा रमेशेन सह स्वकीयं प्रेम कर्तुमभिलषति परं रमेशस्तत्र घृणां कुरुते। विमलया सार्धमानन्देन यदा प्रेम कर्तुमारब्धम्, तदा विमलया तत्र घृणा कृता। इदमेव कारणमभूद् यत् कवितया प्रभावितया कमलया विद्यागतं स्वं शास्त्रार्थविषयकं विरोधं दूरीकृत्य यदा स्वजीवने पदमर्पयितुमानन्दाय किञ्चित् क्षण दत्तम्, तदैवानन्देन सुन्दरतया तद्यौवनमधिगन्तुमहोभाग्यं

मन्यमानेन स्वात्मा तत्र निहितः। यौवनारम्भात् प्रणयबन्धने स्वजीवनं निपातनीयमेव ।

उपाधिग्रहणानन्तरं सङ्गीतकार्यक्रमस्याऽभ्यासाय द्वावुद्यानं प्राप्तौ । तत्र ताभ्यां विद्याभ्यासः कृतः प्रणयाभ्यासो वा, तं तावेवाऽज्ञानीताम् । परं यथासमयं कार्यक्रमस्य कक्षमागमताम्, इत्येव शोभनमभूत्, किन्तु यैश्छात्रैस्तावेकान्ते वार्तालापरतावालोकितौ, तैं द्वयोः कमलानन्द इति नाम संस्कृतम् । यदानीं स्वसङ्गीतप्रदर्शनाय तयो र्नाम्नी समुच्चारिते, तदानीमुपस्थितौ तौ द्वावेव मञ्चमुपगतौ छात्राणाञ्च करतलध्वनिना सहेत्थं स्वसङ्गीतमारब्धवन्तौ !

आनन्दः — प्रेमाणं त्वदीयमिच्छामि ।

कमला — प्रेमाणं त्वदीयमिच्छामि ।।

आनन्दः —

अवरोद्धुं शक्नोमि नहि त्वाम्,
गच्छ, नेति शक्नोमि कथयितुम् ।
किं नेतुं शक्ष्यामि जीवनम्,
क्षण-वियोगमर्हामि न सहितुम् ।।
तिष्ठ गच्छ वा परन्त्वहं ते
प्राणाधारमेव वाञ्छामि ।
प्रेमाणं त्वदीयमिच्छामि ।। १ ।।

कमला —

मनसः पावनतामवगच्छेत्
कथमुन्मत्तोऽयं संसार ?

हृदययुगलमधुमेलनमेवम्
प्रभवन्ति तस्य कथानकसारः ।।
अभिलाषी मम कोऽपि न, जगतो
ह्यधिकारं नो कमपि लषामि ।
प्रेमाणं त्वदीयमिच्छामि ।। २ ।।

"सुन्दरं सुन्दरं बहु, पुनः किम् ? इति छात्रैरुक्तम् ।

आनन्दः —

के के हृदि मे झञ्झावाताः ?
अस्य न कामपि गाथां पृच्छ ।
विना त्वां जगच्छून्यमस्ति मे,
दोषा दिनं वेति मा पृच्छ ।।
जनस्य लोकेऽस्मिन्निवासिनो
नाहमनृतवचनं कांक्षामि ।
प्रेमाणं त्वदीयमिच्छामि ।। ३ ।।

छात्राः — साधूक्तं साधूक्तमानन्द ! किमग्रे कमला विवक्षति ?

कमला —

यदि त्वया विस्मृता भवेयम्,
त्वामर्हामि कथं विस्मर्तुम् ?
यदि विस्मर्तुं नो मामर्हः,
तदर्हेयुरश्रूणि न सर्तुम् ।
मनसि शान्तमेकं कोणं प्रिय !
परं न विस्तारं वाञ्छामि ।
प्रेमाणं त्वदीयमिच्छामि ।। ४ ।।

"किमुक्तम् ? किमुक्तम् ? कमले ! साधु, साधु, पुनरग्रे किम् ?" इति छात्रा उच्चैरूचुः ।

आनन्दः —

प्रणयपथस्य प्रिये ! पथिकोऽहम्,
प्रेमाणं त्वाजीवनमानय ।
जीवनमस्य पथः सहमाना,
विपदो हासं हासं यापय ॥
भयन्न मृत्योः, भवमहार्णवे
प्रणयकेनिपातकमिच्छामि ।
प्रेमाणं त्वदीयमिच्छामि ॥ ५ ॥

छात्राः — धन्योऽसि, धन्योऽसि, आनन्द ! मुहुर्मुहुरेतत् पद्यम् (आनन्दस्तत्पद्यं पुनर्गायति) पुनः किम् ? पुनः किं युवां श्रावयितुमिच्छथः ?

द्वावपि कमलानन्दौ —

अवरोद्धुं शक्नोमि नहि त्वाम्,
गच्छ, नेति शक्नोमि कथयितुम् ।
किं नेतुं शक्ष्यामि जीवनम् ?
क्षणवियोगमर्हामि न सहितुम् । T
तिष्ठ गच्छ वा परन्त्वहं ते
प्राणाधारमेव वाञ्छामि ।
प्रेमाणं त्वदीयमिच्छामि ॥ ६ ॥

T सह् धातोस्तुमुनि रूपद्वयं भवति–सहितुं सोढुं च । अत्र इड् विकल्पेन भवति ।

अतः परं करवद्धौ तौ सर्वेषां छात्राणामध्यापकानां च धन्यवादान् गृह्णीतः, सहैव प्रथमपारितोषिकमपि सादरं कुलपतिना प्रदत्तम् ।

ततः सभायामानन्देन स्वदृष्टिः सर्वतः प्रसारिता, रमेशो न कुत्रापि नेत्रगोचरतामितः । यो जनः सर्वदा सर्वात्मना सहायतायै समुद्यतोऽभूत्, सोऽद्य शरीरेणापि नोपस्थितः । स तूपाधिं गृहीत्वा गृहमेव गतवान् । न कुत्रापि तेन किमपि साङ्गीतिकं चर्चितं, न वा दृष्टं, न च श्रुतम्, सर्वमिदं वैपरीत्यमानन्दे कमलायाः स्वात्मना सम्मेलनादभूदिति, परमानन्दस्य न कापि चिन्ताऽऽसीत् तन्मनसि ।

कमलानन्दयो र्गीतश्रवणानन्तरं केचित् परिचितजनास्तयोः परिचयं प्राप्तुकामा अन्यैः सह परस्परमित्थमालपन् ।

"कोऽयम् ?"

"आनन्दः ।"

"क आनन्द. ?"

"स एव मिश्रस्य पुत्रः, यश्चक्रतीर्थे वसति ।"

"हुँ !" प्रसन्नताऽऽसीद् हुङ्कृतुर्वचसि ।

"बालेयं कस्य ?" विनिर्गतं वाक्यमिदमन्यस्य मुखात् ।

"द्विवेदिनः ।" केनचिदुत्तरितम् ।

"किं तस्यैव लालापतेः ? इति कस्यासीत्प्रश्नः ।

"आम् ।" इति प्रफुल्लतासीद् वाण्यामन्यस्य ।

"यदि स्यादनयोः पारस्परिको विवाहः, तदधिकं शुभं स्यात् । पुनरस्य काव्यकलायाः श्रीवृद्धिरपि नूनं द्विगुणा भवेत् ।" इत्यभवत् कस्यचित् समीहा ।

"श्रूयते यदनयोर्विवाहसम्बन्धस्य वार्तापि प्रवर्तते, किन्तु द्वयोरभिलाषनिर्भरोऽयं सम्बन्धः । द्वयो र्हि पितरौ सम्प्रति मतैक्ये प्रवर्तेते, यतस्तावन्योऽन्यस्याऽभिन्नमित्रे ।" इति परेण तदिष्टवचनं प्रवर्धितम् ।

"किन्तु पूर्वमीदृशं प्रेमाऽनयोर्नासीत्, यादृशमद्य दृष्टम् ! अहो !

महदाश्चर्यम् !" इति जनेषु मध्ये पतिता विद्युदिव कस्यचिद् वाणी ।

"जगदिदमाश्चर्यजनकमेव । बहुविधान्याश्चर्यजनकानि दृश्यान्यत्र दृश्यन्ते ।" इत्यासीत् कस्यापि प्रकृतिप्रेरितं स्वाभाविकं वचनम् ।

"अत्राऽऽश्चर्यस्य को विषयः ? तदस्मान् दर्शयितुं केवलं बाह्यमात्रमाचरितम् । किमिदं प्रेम तदानीं तयोरभून्न वेति जानीतः ।" इति निरगादपरस्य भाषितमीर्ष्यायुतम् ।

"सत्यमुक्तं भवद्भिः ।" गुञ्जितं वचस्तत्रेदम् ।

ततः सर्वैर्ज्ञातमधुना यद्द्वयोः पारस्परिकमात्मनीनं प्रेम । कमलायाश्चाद्य रमेशेन सार्धं प्रेम यावत् कृत्रिममासीत्, तावदानन्दस्य च विमलया सह । यदात्मना वीक्ष्य सर्वथा प्रसन्नाऽऽसीदद्य कमला, तदात्मना सर्वथा शुभमभिलषद्भिस्तत्र सर्वैरप्यानन्दस्य मुहुर्मुहुः प्राशंस्यत सा काव्यकला ।

❋ ❋ ❋ ❋

(६)

तीर्थेशभवनं श्रीफुल्लसहायमिश्रस्य नद्यावर्तगृहम् । इदं चक्रतीर्थं प्रतिवेशे विद्यते । चक्रतीर्थञ्च गङ्गाकुण्डोपरि वर्तते । तत्र मिश्र एव परम्परया मुख्यः । अत्रैव समीपे चतुर्वेदिपरिवारोऽपि प्रतिवसति । अस्यैव परिवारस्यैकोऽस्ति सदस्यो रमेशोऽपि । रमेशस्य पित्रा वाणिज्यं क्रियते । अतः स धनिकोऽपि वर्तते, नाम्ना गङ्गासहायः । नगरेऽस्य गेहः 'सर्वतोभद्रः' इति नाम्ना प्रसिद्धः । पञ्चाऽस्य पुत्राः, तेषु रमेशं विहाय सर्वेऽपि निरक्षरभट्टाचार्याः सन्ति, परं धनेन ते सर्वे व्यापारे बुद्धिमन्तो व्यवहारकुशला नातिनिपुणाश्च । गृहे साक्षरत्वाद् वात्सल्याद् भ्रातृस्नेहाच्च सम्प्रति रमेशोक्तिरादेश इव सर्वैः मन्यते । रमेशोऽस्ति तेषां कनिष्ठो भ्राता । अस्य विवाहचिन्तापि सर्वानपि बाधते । तीर्थे निवासित्वाच्छ्लीपपी यजमानवृत्तिरपि । कार्यमिदं गोविन्दाय समर्पितम् । यदा कदाऽनेन विजयापि सेव्यते । भ्रातृत्रयमापणिक्रमाचरति । चत्वारोऽपि सपत्नीकास्ते ससन्ततिकाश्च । रमेशो व्याकरणाचार्य-

कक्षायामधीते। अस्य वैवाहिकं वाचिकमितस्ततो बहुविधं भवति, किन्तु गङ्गासहायेन श्रीवल्लभोपाध्यायस्य कन्यया सह रमेशस्य विवाह-सम्बन्धः सुनिश्चितः कृतः। कन्यामवलोकयितुमद्य श्रीमहादेवप्रसादो गतः। तदागमनं सर्वेऽपि सम्प्रति प्रतीक्षिवन्तः समुत्सुकमनसो वैवाहिकवाचिकमाकर्णयितुम्। सहसा यदा महादेवोऽपि गृहं प्रविष्टवान्, तदानीमेव स बद्धः सर्वैर्मण्डलाकारेण।

"किं भूतं, वार्तालापश्च कं परिणाममायातः?" इति पृष्टं रमेशजनकेन प्रफुल्लनयनाभ्यामालोकयता।

"परिणामस्तु युक्त एव।" इति प्रोवाचि महादेवेन मुखेन प्रसादं दर्शयता।

"कन्या शिक्षिता योग्या चापि वर्तते?" इति पृष्टे प्रेमनानायणे "किं नाम तस्याः? आकृत्या सुन्दरी सा न वा? इति पृष्टं पुनस्तत्रैव हरिदत्तेनापि।

"कन्या सप्तदशवर्षदेशीया 'विमला' नामिका, शास्त्रिकक्षायाः प्रथमखण्डोत्तीर्णा, आकृत्या सुन्दरी, स्वभावेन सरला, विचारेण नाऽर्वाचीना, परिधानेन स्वपित्रोः स्नेहस्य वात्सल्यस्य चैकायनीभूता साम्प्रतं विश्वविद्यालयेऽधीते पितः! इति सहर्षमुवाच महादेवः।

"वरं, वरं, विमला रमेशस्यैव योग्या।' इति सर्वैस्तत्र समर्थितम्।

"किं कुर्वन्ति तस्याः पितृपादाः? कीदृशाश्च प्रकृत्या पारिवारिकजनाः?" इति केनचित् तस्याः पितुर्व्यापारकर्मणि जिज्ञासा प्रकटिता।

'परिवारे तु तस्याः केवलास्त्रयो जनाः सन्ति, सा स्वयमेकाकिनी तस्याः पिता माता च। तस्याः पिता वार्द्धक्यात्सम्प्रति जीवनवृत्तिसाधनरहितः सञ्चितधनराशिजीविकोपायश्च वर्तते।" इति प्रकटितो महादेवेन तत्परिचयः।

"वरमस्ति वरं भ्रातः! सा विमला तु भावितः स्वसहचरस्य

स्थाने रमेशस्याऽभिलाषिणी वर्तते ।" इति कथितवान् प्रेमनारायणस्तद्रहस्यं प्रकटयन् ।

"त्वया कथं ज्ञाता सा ?" इति पृष्टवान्महादेवः ।

"श्रुतं मयैतत् तद्विषये ।" इति प्रत्यवोचत सः ।

"कस्मिन् प्रतिवेशे सा निवसति ?" इति प्रश्नं कुर्वतो हर्षोऽभूज्जिज्ञासो गोविन्दस्य वाचि ।

"उपाध्याय–प्रतिवेशे" इत्युत्तरमासीद् हर्षभरं महादेवस्य ।

"विवाहे सम्भूते तस्याः पितुस्तत्सर्वं पुनरस्माकमेव स्यात् !" इति महादेवमुखं प्रतीक्षमाणेन पित्रा तदेकाग्रचित्तेन जिज्ञासितम् ।

"अथ किम् ?" इति सहर्षं कथयता पुनर्महादेवेन किमप्युदितम्—

"न जाने, कतिवारं मया तद्योग्या कन्याऽन्वेषिता, किन्तु सर्वदैव विवाहविषये रमेशेन निषेधः कृतः । यद्यपि तेन तदाचरितं पितः ! तर्ह्ययं न कदापीदृशं दुष्प्रयत्नं करिष्ये । इतस्ततः परिभ्रमणेन मे पादयोरुपानद्भ्यां विस्फोटा अपि सञ्जाताः ।" इति वागतिवादोऽभूत्तस्य दक्षिणेन करेण श्मश्रूणि संस्पृशतः ।

"नाहं, नहि, ईदृशो रोषो न विधेयः । किं भूतं तन्निषेधने ?" मधुरं प्रोवाचि साच्छुरितकं जनकेन ।

"किमहं तद्दिनस्याऽपमानमिव पुनरपि स्वापमानं सहिष्ये ? किन्नावगतं— 'यद् मे विवाहः श्रीवल्लभस्य गृहे कारयिष्यते, तस्याहं साक्षाद् विरोधं करिष्ये, येन भावत्की सामाजिकी स्थितिरपि धूमिला भवेद्' इति सालिवादं वचस्तस्य ? ततोऽपि भवतां कथितेन मयाद्य तत्र गत्वा सर्वा स्थिति निरीक्षिता । कन्या सर्वथा योग्या । तन्मात्रेदमपि विज्ञापितं यत्सा रमेशस्याभिलाषिणी वर्तते । तया तेनैव साकं तत्र विद्यालये स्वपाठोऽपि विचार्यते । पुनरयं तां कथन्न वृणीते ? इति न जाने ।" इति सक्रोधमवोचत गम्भीरवचसा महादेवः ।

अधुना स विमलां विवाहयितुं नैव निषेधयिष्यति। यदा सा तस्यैवाभिलाषिणी वर्तते, तदा स किम्........," इति पितु र्वाक्यस्याऽर्धोक्ते-ऽकस्मादन्तः प्रविश्य—"नाहं वरिष्ये तां, नाहं वरिष्ये ताम्। यन्मया पूर्वमुक्तं, किं भवद्भिस्तदद्यावधि नावज्ञातम्? गृहे मां भवन्तो निवासयिष्यन्ति न वा?" इत्थं भ्रुकुटिं परिवृत्य सरोषं ब्रुवाणो रमेशः स्वमध्ययनकक्षं गतवान्।

अद्य पुना रमेशगिरा सर्वे सन्ति विषण्णहृदयाः। किन्तु पितुर्हृदयमधुनापि सर्वथा प्रसन्नमेव। "मूर्खोऽस्ति सः। यः परिस्थितिं नावगच्छति। किमिदं तस्य प्रागल्भ्यम्? शास्त्रिपर्यन्तमधीतोऽपि स न किञ्चिज्ज्ञानमावहति? नहि, नहि, अग्रे भविष्यति तस्य सम्यग् बोधः। सम्प्रति स बालः। किं विंशतिवर्षाणामवस्था, काप्यवस्था मन्यते? अस्यामवस्थायान्त्वहं नग्न एवाऽभ्रमम्। तेन तु सम्यक् परिधीयते। इत्येव सम्प्रति तस्य बह्वास्त।" इति विचारास्तन्मनसि वारं वारमुदतिष्ठन्।

महादेवस्तु तस्य भ्रूभग्नं मुख दृष्ट्वैव त्रस्त्यं जगाम। "तस्य वैवाहिकी वार्ता तेन कदापि न करिष्यते। 'यदा स कमपि विषयमधिकृत्य वार्तामाचरिष्यति, तदा तस्मिन् विषये न किञ्चिदिह ज्ञायते मया' इत्येवोत्तरं स प्राप्स्यति सदा।" इत्थं मनसा नितरां विचिन्त्य सुनिश्चितं तेन। तस्य कटुवाक्येषु तदीयं मनो नितरां संलग्नमभवत्। अस्य यादृशो दुष्प्रभावस्तस्मिन् पतितः, तादृशस्तस्य जीवने न कोऽप्यवसरः समायातः। रमेशो यावान् बुद्धिमान् चतुरश्च तेनावगतः, तावानद्य प्रगल्भतामितो मूर्खोऽपि। तदधुना तस्य हृदये कापि नावशिष्टा रमेशस्य प्रभावसत्ता।

किमपि विचार्य दीर्घं निश्वस्योत्थितेन गङ्गासहायेन रमेशस्य कक्षमार्गोऽग्राहि। तत्र स धृतकरतलवामकपोलो विचारयन्निव मञ्चोपविष्टस्तेनाऽदर्शि। पुनश्च किमपि शनैरवादि —

"रमेश! कथं रुष्टोऽसि,! किं कारणम्? कथयस्व! किमत्र

मञ्चोपरि ? आसन्द्यामुपविश, सा तु तव ............ ।"

"सर्वमहं जानामि पितः । किन्तु तां न वरिष्ये ।" क्रोधोऽभूत् तस्य वाण्याम् ।

"कथन्न ? किमपि कारणमपि भवेत् ।" इति विनम्रतया मार्गोऽन्वेषितः ।

"अनिच्छा तत्र मुख्यहेतुः ।" इत्युपेक्षया तत्र शङ्का प्रवर्धिता ।

"काञ्चिदन्यां तु विवाहयितुं तवाभिलाषो न वा ?" इति वाचा रहस्यमवगन्तुमिच्छा प्रकटिता ।

पितुर्वचनमाकर्ण्य रमेशस्य मुखं प्रफुल्लतायाः प्रसादेन परिपूर्णमासीत् । पुनरपि पित्रा स्वसूक्ष्मदृष्ट्या तदवीत्य किञ्चिदग्रे निगदितम्—"कथय, कथय, सङ्कोचं त्यज । तव जीवनस्य मरणस्य च द्वयोरपि प्रश्नः । यदि परिणय एव समुचितो न भवेत्, तर्हि जीवनं कथं सुखीस्यात् ?" इति वाणी हृदयान्तर्गता । सम्प्रति विशेषतः प्रफुल्लं तस्य वदनम्, परं न किमपि तेनोत्तरितम् । ततोऽपि "कथयस्व, कथयस्व, सङ्कोच मा गाः । कया सह स्वात्मानं परिणेतुं तवाऽभिलाषः ?" इति वाचा रहस्यं प्रकटयितुमपि सहवादो विहृतः ।

"कमलया सह" विनिर्गता रमेशस्य प्रफुल्लहृदयादियं मन्दवाक् ।

"कमलया सह" इत्याश्चर्यमासीत् तस्य पितुर्वचने ।

"आं, कमलया सह" दृढतापूर्णनिश्चयोभूत् तस्य वाण्याम् ।

"का कमला ?" जिज्ञासया स्वमुखं विवृतम् ।

"तस्यैव लक्षपतेः .........", सङ्कोचेन सुस्पष्टा न भारती ।

"कस्य लक्षपतेः ? जिज्ञासा वृद्धिं गता ।

"तस्यैव लालापतेः ।" रहस्यं सुस्पटमभवत् ।

"किं द्विवेदिनः पुत्री ?" इति तडिदिव भूमौ निपतिता वाक् पुत्रस्य श्रवणयो विस्मितचक्षुर्भ्यां प्रकाशमाशुतया निक्षिपतः पितुः ।

"आम् !" गुञ्जितोऽयं पुत्रस्य मन्दस्वरः ।

"श्रूयते तस्या आनन्देन सह प्रणयः। द्वयोरपि पितरौ तयो विवाहसम्बन्धमपि निश्चितवन्तौ । वर—यात्रा संवत्सरान्तरं द्वितीयायां भविष्यति ।" इति विस्फारितनेत्राभ्यां मुख प्रति पश्यतो हि कस्यचिदपराधिन इव निवेदनमभूत् तस्य पितु र्मन्दवाचः ।

"किमपि स्यात् पितः । कमलया सह मदीयो विवाहो न सम्पत्स्यते चेत्, तदहं विषं पीत्वा मृतः स्याम् ।" इत्युक्त्वा सरोषं द्रुतगत्या स कक्षान्निर्गत्य सोपान-मार्गेण नीचैरवातरत्। पिता च तत्रैव "कुत्र गच्छसि ? कुत्र गच्छसि रमेश ।" इति कथयन्नेवाऽऽसन्द्यामुपविष्टो द्वारदिङ्मुखोऽभवत्तथा, यथा मातरि गतायां निस्सहायो बालः ।

   

(१०)

रात्रिन्दिवं तीर्थेशभवने मङ्गलानि गीयन्ते । तत्र प्रतिवेशिन्यो ललनाः समागत्य स्वं स्वं रागमालपन्ति स्म । काश्चित्तु केवलं ताम्बूलपूगीफलान्येव भक्षयितुमाव्रजन्ति स्म । काचिदानद्धमित्थ प्रवादयति स्म, यत्तत्र तस्या नाम प्रसिद्धि गतम् । कयाचिन्मञ्जीर-वादने कीर्तिर्लब्धा कयाचिच्च गायने । नर्तने तु सर्वा एव कुशला आसन् । का नाम दाक्षिणात्यनर्तक्योऽपि, यास्तासां समतामपि कुर्युः । कुतस्ते प्रसिद्धि गता गायका वादकाश्च, ये तासामानद्धस्य तालमन्वपि तिष्ठेयुः । 'अहो ! गीतम् ! अहो वादित्रम् !' इति सर्वेऽपि दर्शकाः प्रशंसन्ति स्म । किं बहुना ? बालानां तु तत्र क्रीडैव सञ्जाता ।

अद्यास्ति यज्ञोपवीतसंस्कारः। मिश्रेण स्वस्य पुत्रस्य पूर्वमयं संस्कारः परिस्थितिवशान्न विहितः । इह कलावित्थमेव यदा कदा संस्कारा भवन्ति, नैव यथासमयम्, अतो न कोऽपि दोष इति विचिन्त्य आनन्दस्य मण्डपः प्रीतिभोजश्च श्वः परेद्युश्च वरयात्रा । अतो नापितोऽद्यैव "भो ! भोः ! श्रीयुत ! ओ३म् प्रकाश त्रिवेदिन् ! मिश्रोपाह्वस्य श्री फुल्लसहायमि-

श्रस्य गृहे पुत्रस्य वैवाहिककार्ये सम्मेलयितुमिदमाह्वानं सादरं प्रदीयते" एवंविधमामन्त्रणं निमन्त्रणं च गृहं गृहं गत्वा करोति। "किं भोः! तत्र कस्याऽयं विवाहः?" इति श्रुत्वा स "तत्पुत्रस्याऽऽनन्दस्य, कश्चाऽन्यस्तत्र विवाहयोग्यः? स एक एव सन्ततिस्तस्य मिश्रमहोदयस्य, पुत्रो मन्येत पुत्री वा, किन्न ज्ञातं भवद्भिः?" इति कथनानन्तरं "कया सह विवाहः? इत्याकर्ण्य लालापतेः सुतया कमलया सह" इत्युत्तरं ददानः सामान्येन व्यवहरति।

परमिदं को जानाति यदग्रे किं भावि? अहो! विचित्रा गतिः। एकतो यावन्तो वैदिकस्वरा ध्वन्यन्ते वेदपाठिभिः पण्डितैश्च, अन्यतश्च तावन्त एव करुणस्वरा अपि श्रूयन्ते प्रतिवेशिमहिलाभिः सहोच्चैर्घोष्यमाणाः।

"भ्रातः! भ्रातः किं भूतं त्वयि? कुतो विद्युदियमापतिना रे! हताहं, हताहं क्व गच्छानि? किञ्च करवाणि? किमद्य मे गृहस्य सूर्योऽस्तं गतः? नहि, नहि, त्वमधुनैव नीरोगतां यास्यसि, भेषजमानयामि, भेषजमानयामि। 'असाध्योऽयं ज्वरः, ततोऽपि हृदगतिरवरुद्धा' किमेतद् वैद्यन कथितम्? त्वं तत्र गतः कथमासीः? भाषणेन किं भूतम्? गमनस्य किमयमेव परिणामः? हा मे मन्दभाग्यम्! इत्थं बहु विलपन्ती संज्ञाहीनाऽभवत्कमला।

"वत्से! वत्से! किं त्वमद्यैव गच्छसि? धावत, धावत, पश्यत, पश्यत रे! मम सुतायामपि किं जातम्? वत्स! वत्स! मे सुरेश! किं त्वं स्वसारं न पश्यसि? वत्स! अस्मान् विहाय त्वमेकलः क्व यासि? किमस्यां जातं तव भगिन्याम्? पश्य, पश्य, मम नेत्रतारक! हा! मम ज्योतिर्गतम्।" इति विलपन्तौ मातापितरौ, "नाथ! नाथ! मामेकाकिनीमत्र परित्यज्य त्वमेककः क्व यासि; क्व यासि? मोहनोऽयं तव मुखं प्रतिप्रेक्षते, कथन्नाऽस्य मुखं स्वाङ्के निधाय चुम्बसि? प्राणनाथ! कथं रुष्टोऽसि? किं स्वपुत्रमपि न पश्यसि? ईदृशं रोषं कदापि ते नाऽपश्यम्। मयापि सह प्राणेश्वर! कथन्नाऽऽलपसि भोः! हा! मम सर्वस्वं गतम्।" इत्थञ्च क्रन्दतीं भ्रातृजायाम्; संज्ञां प्राप्य विलोकयन्ती "मा रोदीः, मा

रोदीः, भ्रातृजाये ! शान्तौ भवेतं पितरौ ! नापीह कोऽपि कस्यापि सहगामी। आत्माऽयं सर्वदाऽस्त्यजरोऽमरश्च । किं गीतोपदेशोऽद्य नायाति युष्माकं स्मृतिपथम् ?" इति सान्त्वयन्ती तान् करुणं वदन्ती साऽश्रुकणान् विमुञ्चन्ती सर्वेषु धैर्यं समर्पितवती।

स्वस्तिकसदने सुरेशस्याऽनुपस्थितिरभूत्। वाराणसेय–संस्कृतविश्वविद्यालये स व्याकरणविषयकं भाषणं पठितुमयात्। ततो गृहमागत्य द्वे दिने यावज्ज्वरेण स ग्रस्तोऽभूत्, तथापि स्वविश्वविद्यालये तस्योपस्थितिरेकस्मिन् समारोहेऽनिवार्याऽभूत्। तेन ज्वरस्तस्याऽसाध्यतां प्राप्तः, ततश्च हृदयगतिरवरुद्धा। पुनः किम् ? दुग्धेश्वरसमीपे श्मशाने तस्य दाहसंस्कारोऽभूत्, यत्र कर्णपरम्परया सहसा सुरेशनिधनमाकर्ण्य मिश्रपरिवारोऽपि सम्मिलितोऽभूत्। कमलाया विवाहस्य केवलं दिनद्वयमेवाऽवशिष्टम्। या विवाहस्य तिथिरासीत्, तस्यां तिथावपि सुरेशस्य निधनत्वात् विश्वविद्यालयस्याऽवकाश आसीत्, पुनर्गृहे कीदृशोऽयं विवाहः ? यदाऽन्ये जनास्ते शोकायन्ते, स्वस्तिकसदने तदा परिणयध्वनिर्भवेत्, किमतः परं लोकविरुद्धं स्यात् ? सम्यगिति विचार्य कमलया पित्रादेशेन नापितं तीर्थेशभवनं गमयित्वा परिणयतिथिः परिवर्तिता।

आनन्देन तदनन्तरं 'श्रेयांसि बहुविघ्नानि' इति मनसि कृत्वा दुःखं बहुमन्यमानेन सपरिवारेण सान्त्वयितुं स्वस्तिकसदनमगम्यत। स्वनेत्राश्यामश्रूणि तदा निर्गमयता कमलायै सान्त्वनं तेन, द्विवेदिने च मिश्रेण समर्पितम्। महिलाभिः कण्ठे कण्ठे मिलित्वा— "शास्त्रिमहोदयोऽतीवशुद्धचेताः, सरलस्वभावः सहजस्नेहश्चासीत्। तादृशो लोके जनो भवितुमत्यन्तं दुष्कर एव। यदा कदा मयाऽवादि, तदैव मे पत्रं व्यलेखि तेन। परमेशः सर्वदैव तत्पुरुषसंयोगादिहलोकं पृथक्कुरुते।" इत्थं मध्ये मध्ये परस्परमालपन्तीभिर्मन्दं मन्दमरुद्यत।

तासु महिलासु काभिश्चित्तु—"मा रोदीः, मा रोदीः सुरेश-

मातः ! रोदनेन किं भवति द्विवेदिजाये ! सुरेशो यदि तवाऽभविष्यत् तर्हि त्वां विहाय कथमेकाकी सोऽगमिष्यत् ? किञ्चिद् धैर्यमवलम्बस्व । शरीरस्यास्य नैव कश्चित् संकेतग्रहः, न जाने कदेदं समाप्तिं व्रजेत् ? आत्माऽयं सदा नित्यः, न केनापि हन्यते, नापि स्वतो म्रियते । मोहनमेव सुरेशं मन्यस्व । प्रतिकृतिस्तस्याऽयमेव । इममेव सम्यक् पालय, पोषय, तदनुसारमेव लालय च । वधूमपि सान्त्वय । विवाहिता कमला स्वगृहं यास्यति । अस्यास्त्वामन्तरेण नास्ति कश्चिदन्यः । सुरेशमात र्मा स्म रोदीः, मा स्म रोदीः सुरेशमातः !" इत्थं तस्यै सान्त्वना प्रदत्ता ।

अन्याभिश्च —"वधु ! मा रुदिहि, मा रुदिहि । स्वपुत्रमेव पालय सुरेशजाये ! अयमेव तवाऽग्रे जीवननौकां पारयिष्यति । मा विलप, पतिशोकादस्य लालने च वधु ! ह्यनवधानतां मा गाः, येन हस्तप्रक्षालनमस्मात्त न स्यात् । ईश्वरो यच्चिकीर्षति, तदेव भवति । किमतिप्रलपनेन मोहनमातः ! शान्तिं धारय, शान्तिं धारय । मारुदो वधु ! मा रुदः ।" इत्थं बहुविधं सान्त्वमदायि ।

आनन्दः सपरिवारः सायं गृहमागतः । कमला कतिपयान् दिवसान् यावद् भ्रातृशोकाद् आनन्देन सह वार्तामपि नाऽऽलपत् । किन्तु स गङ्गोपवनं तां द्रष्टुं प्रतिदिनं गच्छति स्म । तदनुपस्थितिवशात् तस्य हृदये चिन्तयापि स्ववासः कृतः । 'कथन्नायाति कमला गङ्गोपवनम् ? किमपराद्धं मया ? येनेयं प्ररुष्टा' इत्थं विचारेण विरहेण च स विक्लवोऽभूत् । परमेकस्मिन् दिने तन्निकायं गत्वा रहसि स तामपृच्छत् — "कमले ! तत्र त्वं कथं नायासि ? प्रतिदिनमेव प्रतीक्षेऽहं त्वदागमनम् ।" इति समुचितमुत्तरमाकर्णयितुमानन्दस्तदाननमभि विलोकितवान् ।

"आनन्द ! यद्यहं सम्प्रति तत्र गच्छामि, तदिमे जनाः — 'भ्राता त्वधुनैवोपरतः । यौवनमदेनेयं सर्वं विस्मृत्य पश्यति प्रियम् । पश्यत, पश्यत, आनन्देन सह स्वमानन्दयितुं गङ्गातटमुपगच्छतीयम्' इति कथितेन विना नैव

श्वसितारः । लोकस्तु स्वानुकूल्यमाचरति, तस्य किमन्येन प्रयोजनम् ? पुनश्च 'कमलानन्दः' इत्यावयो र्नाम प्रसिद्धमेव ।" इत्यब्रवीत्सहर्षं स्मयमाना कमला ।

"परमद्य तु ......, व्यतीतानि बहूनि दिनानि कमले ! अद्य तु मया सह चल्यताम् ।"

"अस्तु, तावदेहि, गच्छावः।"

ततस्तौ यदा गन्तुमारभेतां, तदन्तः पुरान्निर्गता तदा कर्णेषु निपतिता कापि गिरा—

"कमले ! क्व गच्छसि पुत्रि ! सायम् ?"

"नैव कुत्रापि मातः ! इयमागच्छामि ?"

   

## (११)

"मम हृदये नासीदयं विश्वासो यद् भवन्तो धनलोभिनोऽपि भविष्यन्ति मित्रतापदेशेन । पूर्वं भवद्भिर्मे सुतया सह स्वपुत्रस्य विवाह-प्रस्तावः कृतः, सम्प्रति तेन सह धनमपीष्यते । अतस्तं प्रस्तावमधुनाहं न स्वीकरोमि, सहैव चैतदपि कथयामि यदद्य भवन्तो मां धनं भिक्षन्ताम् । भवन्तमहं स्वीयं परमं मित्रमेव निरन्तरमवागच्छं किन्तु श्रीमता मे मित्रतया प्रतारणशिक्षा गृहीता । अद्यावधि भवतामिमां नीतिमहं नाऽबोधं !" इति सभ्रूभङ्गं लालापतिरुवाच ।

"किमद्यापि श्रीमद्भिर्विजयासेवनं कृतं ? तदपीदृशं गम्भी-रम् !" इत्युक्तं विहसता फुल्लसहायेन ।

"किमुक्तं मिश्रमहाभाग ! मया विजया सेविता ? एतत्तु स्व-हृदयेनैव पृच्छ्यताम् ! सत्यमार्गं कोऽनुसरति भवान् अहं वा ?" इति सक्रो-धमकथयल्लालापतिः ।

"नैव जाने, किमित्थं भवति सञ्चरति ? एतद् ज्ञात्वा मयि महदाश्चर्यं सञ्जायते यद् भवन्त स्वेन हि मिथ्यापभाषणेन कोऽनुबध्नाति?

मया विवाहस्य तु प्रस्तावः स्वपरम्परागतचैरकालिकमैत्रीं स्थापयितुमत्र भवतां समक्षं कृत आसीत्, येनाऽऽवयोः कदापि कर्णसुग्रीवनयोरिव परस्परसम्बन्धो विच्छेदं न प्राप्नुयादिति भावयता, भवद्भिश्च स्वेच्छया सहर्षं पारितोऽपि। परमद्य श्रीमद्भिस्तस्य योऽर्थो बोधितः, स्वप्नेऽपि नाऽभवद् मे कदापीदृशो विचारः। परमेतत्तु कथ्यतां, केनेत्थं निगदितम् ? तदपि सन्दिग्धमीदृशं सिताऽसत्थं द्विवेदिनः !" इत्युक्तं मिश्रमहोदयेन सस्मितम्।

"सर्वमिदं भवद्भिः कृत्रिममाचरितम्। वस्तुतस्तदेव, यन्मया निवेदितं भो मिश्रपादाः !" इति विवदमानस्य द्विवेदिनो वचने क्रोधोऽभूत्।

"आवयो मैत्रीविच्छेदाय कस्याऽयमुपक्रमः ? सुस्पष्टं कथ्यतां श्रीमन् ! किं स नैव जानाति यदावयोः परम्परागतेयं चैरकालिकी मैत्री, तामद्य छेदयितुं कः समर्थः ? ईदृशा अवसरा न जाने कतिवारं समागताः, किन्तु यथा ते समायातास्तथैव ते गताः, न कोऽपि तेषां प्रभाव आवयोरापतितः। तादृश एवायमपि कालः, परमेतन्न जाने यद् भवन्तः सत्यायन्ते कथमित्थं मिथ्यापभाषणम् ?" इति निवेदयतो मिश्रस्य गिरायामासीद् विनम्रता।

"इत्थं मया बहुशः श्रुतं, परमतः परं मनागपि तादृश मे कर्णगोचरं न कर्तव्यम्।" इत्याशासे मिश्रबन्धो ! अन्यथा ..........," इति किञ्चित्पारुष्यमाददता निगदितं द्विवेदिना।

"किन्तु.........., भवन्तस्तु परेषां मिथ्याकथनमेव सत्यमिव मन्यन्ते, तर्हि मे को दोषः ? पिशुनपरास्तु बहवः ! किं कस्यापि मुखं बाध्यते ?" इत्थं खिन्नमनाः कथयन् हस्तयुगेन मञ्च ताडयित्वा, उपानहौ धारयन्, चतुष्पादिकां किञ्चिदपसार्य गृहं गन्तुमुदस्थाद् मिश्रः।

"नहि, नहि, उपविश्यताम् उपविश्यतां तावद् मिश्र महोदय ! कञ्चिज्जलपानं विधाय गम्यतां श्रीमन् !" इति सकृत्रिमस्मितं तेनोदितम्।

"नहि, नहि, नाधिकं कष्टं सहस्व। वादितमत्र होरापञ्चकम्। सान्ध्यो विधिरुपक्रम्यताम्। पश्चात् पुनर्मिलिष्यावः।" इति निगद्य सहसागतो मिश्रः।

   

## (१२)

मिश्रस्य हृदये महद् दुःखं विद्यते। यो जनो बालकालादद्यपर्यन्तमपि जीवनगामी, स तमद्य धनलोभीति कथयति। यो धनं तृणवन्मन्यते, स कथं धनलोभीति शब्दं श्रोतुमर्हति? धनेनापि स कस्मादपि न न्यूनः, किन्तु लक्षपतिरिति स्वात्मानं कथयितुं नैव प्रवादयति। गृहे सम्यक् खादति खादयति च सर्वान्; पिबति पाययति च पेयानि, न कस्यापि गृहं भिक्षितुं स याति। यच्च कमलया सह स्वपुत्रस्य विवाहं प्रस्तावितवान्, तद् मित्रतां स्थिरीकर्तुं न तु धनलोभेन। यदि स कस्यापि कर्णेजपस्य संकेतं प्राप्नुयात् तर्हि स सम्यगेव निर्दिशेद् यत्कथमित्थं पैशुन्यमाचर्यते? आनन्दस्य विवाहः कमलया सह भवेन्न वा—इत्यनया चिन्तया न बाध्यते तच्चित्तम्। स्वाभिमानसुरक्षणाय स सर्वेषामानुकूल्यमाचरन् सर्वानपि समाद्रियते। यथा तस्य व्यक्तित्वरक्षायां न कापि बाधा भवेत् तथैव स सर्वदा व्यवहरति। पुनरपि तेन सार्धमसत्यं सत्यमिवाऽवबोधन् कोऽपीत्थं व्यवहरेत्, तत्तदा स स्वात्मनस्तिरस्कारमेव मन्यते, यं कदापि नैव स सोढुं शक्यः।

ततः स गृहं प्राप। सायन्तनकृत्येन निवृत्तीभूय किमपि भुञ्जानः स आनन्दमातरमवादीत्— "शृणु, कमलायाः पिता मामद्य धनलोभिनं कथितवान्!"

"कं विषयमधिकृत्य?" इति लक्ष्मीरुक्तवती तालवृन्तकं सञ्चालयन्ती।

"आनन्दस्य विवाहवार्ताम्।"

"तत्कथम्?"

"तेन कथितं यत्त्वं कमलया सह स्वपुत्रस्य विवाहं धनलोभेन चिकीर्षसि, मित्रतां च व्यपदिशसि।"

"किमित्थम्?" आश्चर्यमासीद् वचसि।

"न जाने।" तदवबोधो मुखमधश्चकार।

"मिथ्योपहासः कृतः स्यात् ।" इत्युपक्रमितमग्रे तस्याः मनीषया ।

"नहि, नहि, मुखमुद्रां विकृत्य ........ ।"

"भवता किमुक्तं पुनः ?" जिज्ञासया मार्गोऽन्वेषितः ।

"किमुक्तं मया ? कथितं यद् भवद्भिः श्रुतं तत्सर्वमसत्यम् ।"

"युक्तमुक्तं भवता । समयोऽधिकोऽतीतः । तदानीं सुरेशस्य मृत्यु र्यदि नाऽभविष्यत्, तदस्मिन्नुपयमे नैवाऽपतिष्यत्कोऽप्यवरोधः । पुनराषाढमासे तेन स्वेच्छया परिवर्तितोपयामतिथिः । ततो वैशाखे मोहनोऽपि मृतः । अनन्तरं पाणिग्रहणस्य शुभा तिथि र्नासीज्ज्येष्ठे । पुनः साम्प्रतमपि बाधाऽवलोक्यतेऽस्मिन्मार्गे । न जाने, कीदृशमस्यापि भाग्यम् ? यदा स्थाली सम्मुखमायाति, तदैव मक्षिकापातो भवति ।"

"युक्तमेव वदसि ।"

"पूर्वं यदा श्रीवल्लभो गृहमायातः स्वकन्यया सहाऽऽनन्दस्य विवाहं कर्तुम्, तदा मया कथितमासीत्– "इदानीमेव विवाहं कुरु'; बाल्ये विवाहः समुचित एव । यतो ह्यग्रे कामपि बाधां प्राप्य जगतश्चाकचिक्येन च सह सर्वेषां मनांसि सर्वतो भ्रमन्ति । न जाने, ततः कस्य क्व प्रवृत्ति र्भवेत् ?"

"कथनन्तु तव समुचितम् ।"

"मदुक्तं तु किञ्चिन्नाङ्गीकृतम् । तस्याऽयमेव परिणामोऽभवद् यदानन्दस्याऽऽयुषि वर्षाणामेकविंशतिरतीता, परमद्यावधि विवाहो न भूतः । विमला रमेशमभिलषति, अयञ्च कमलाम् । तामन्तरेण काञ्चिदन्यामधुनाऽयं कथमभिलषिष्यति ? यदा हस्तिनो दन्ता बहि र्निस्सरन्ति पुनर्मध्ये न तिष्ठन्ति ।" इति नारीसुलभेन ईषत्कोपेन सह प्रजल्पन्ती सा पुनर्विरराम ।

"आम् ! युक्तमेवं वदसि ।" इति कथयन् स्वमुखं प्रक्षाल्य कर-पटेन प्रोञ्छयन् शयनागारमयासीत् । ततः क्षणं मनसि विचिन्तयन् शीतातिशयात् स्वात्मानं नीशारेणाऽऽवृत्य सोऽशयिष्ट ।

   

## (१३)

"किमस्ति ?" किमपि श्रुत्वा निरयादवरोधात् कस्यचिदियं वाक् ।

"द्विवेदिनः सन्ति न वा ?" केनचिदुक्तम् ।

"कस्त्वम् ?" आसीदयं तारस्वरः ।

"सोऽहं गङ्गासहायः ।" नम्रताऽऽसीद् व्यवहारे ।

"अस्तु तावत्, आगम्यताम्, आगम्यतां श्रीमन् ! भवता कथमयं संकोचः कृतः ? इदमपि भवतामेव गृहम् । पृष्टेन विनैव प्रवेष्टव्यम् ।" इत्यवोचत वहिरागत्य विनम्रं लालापतिः ।

"भवादृशो जनो भवन्तं विहाय न कोऽपि मे दृक्पथमायातः, यस्य प्रकृत्याः सारल्येन हार्दस्य सहजत्वेन कोमलेयं वाणी" इति मधुरं वचसा निगदन् गङ्गासहायोऽपृच्छत्—"किं मे वचनं परीक्षितं भवद्भिः ?"

"किमत्रैव प्राङ्गणे ? भवन्तो नैवोपविशन्ति किम् ? आगम्यताम्, कक्ष्यायामुपविश्य वार्तामालपाव" इति निवेदयमानस्य द्विवेदिनो गिरा प्रकटितो हर्षः ।

"नहि, नहि, मे समीपे सम्प्रति नाधिकः समयः । एष आपणिकं व्रजामि । ग्राहकानामागमनाय विशेषतः प्रातरयमेव कालः । वादितं ह्योराष्टकम् ।" इति वदता तेन तत्रोपवेशनस्याऽनिच्छा प्रदर्शिता ।

"क्षणं विरम्य, किञ्चिज्जलपानं विधाय गम्यताम् । नैवाऽत्र भवन्तो न्युषितुमागताः ।" इत्युक्त्वा चतुर्वेदिनो हस्तं गृहीत्वा लालापतिः कक्षं प्राविशत् ।

"मम वचनं परीक्ष्य कं निष्कर्षमागता द्विवेदिनः !" इति चतुर्वेदिना चतुष्पादिकायामुपविश्य वार्तामग्रे कुर्वता मन्दस्मितं च प्रक्षिपता प्रश्नः कृतः ।

"निष्कर्षस्तु नैव कश्चिदधुना ? परं यथा मिश्रेण सह मया

वार्तालापः कृतः, तं कदापि स विस्मरिष्यति नैव। (पानकपात्रं हस्ते कृत्वा) अपरञ्च किमपि वृत्तान्तं श्रावयन्तु भवन्तः।" इति द्विवेदी चतुर्वेदिनो मुखं प्रति पश्यन्, किञ्चिदपरञ्च रहस्यमाकर्णयितुमिच्छया जगाद।

"वृत्तान्तं तु नैव किञ्चिदपरम्, किन्तु ·····, (मिष्ठान्नपात्रं मञ्चे संस्थाप्य) विलम्बो भवति सम्प्रति, गच्छामि। (उत्थाय, पदद्वयं गत्वा) बाढम्! यच्छ्रावयितुमहमत्रागमं, तत्तु व्यस्मरं परमधुना स्मरामि।" इति मन्दस्वरेणाऽकथयच्चतुर्वेदी।

"उपविशन्तु, उपविशन्तु भवन्तस्तु गन्तुमधिकं त्वरायन्ते चतुर्वेदाः! स्मृतं किम्?"

"आम!"

"कथ्यतां तर्हि।"

"भवद्भिः कमलाया विवाह आनन्देन सह निश्चितः, तत्र किमपि विचारितं, चिन्तितं, विचिन्तितं न वा? किं केवलं मित्रतायामेव?" इति कथयता चतुर्वेदिना तदन्तर्गतमन्वेषितम्।

"किं किम्? मया तु न किमपि विचारितम्।" इति तेन वदता तत्र जिज्ञासा प्रदर्शिता।

"द्विवेदिनः! आनन्दस्य भवतां च लालापतिरिति नाम्नो राशिरेक एवास्ति मेषः। यदैकराशिमन्तौ श्वशुरजामातरौ स्याताम्, तदा तत्र जामाता विजयी भवति श्वशुरस्य च गृहविघातकः। सम्प्रत्यस्य समयः सप्तवर्षाणामस्ति, तत्र च त्रीणि वर्षाणि तु व्यतीतानि चत्वारि चावशिष्टान्येव। तस्यायमेव परिणामोऽभूद् यद् आनन्देन कमलायाः विवाहस्य निश्चयानन्तरं भवतामपत्ये कालेन कवलिते। यद्येवंविधैव स्थितिरग्रे भवेद् तर्हि भवतामपि समयस्तत्र गन्तुमतीव सन्निकटोऽस्ति, नात्र सन्देहलेशः। कमलायाः विवाहस्तु तेन सह भवितैव, नात्रापि कापि विचिकित्सा? पुनः किम्? वंशनाशस्तु भवद्भिः कारित एव प्रत्यक्षम्, आत्मनाशश्च कार्यतामधुना, सोऽपि

पूर्वं गृहिणीमृत्युमवलोकयद्भिः। पश्चादिदं सर्वं धनं कस्य? तवेति किम्? नैव, नैव, तस्यैव मिश्रमहाभागस्य कमलापतेरानन्दस्य पितुः। इयमेव तस्य कूटनीतिः, या मैत्रीव्याजेन क्रियते।" इत्थं प्रवदता तेन चतुर्वेदिना पैशुन्ये चातुर्यं प्रदर्शितम्।

"किं किं मे पुत्रः सुरेशोऽस्मादेव कारणान्मृतः? ततश्च तत्पुत्रो मोहनोऽपि —……," इति दीर्घं निश्वसता सशङ्केन द्विवेदिना पृष्टम्।

"अथ किम्? यदि मे वचन न विश्वसन्तु भवन्तः, तर्हि प्रत्यक्षमेव गृहिणीमृत्युमवलोकयेयुः, येन भावत्की शङ्का निवर्तेत" इत्यभिवदता चतुर्वेदिना तदन्तः करणमवलोकितम्।

"नहि, नहि; भवतामिदं वचनमहं विश्वसिमि, तथापि पृच्छामि— कथमेतद् विज्ञातं भवद्भिः? इति निगदता द्विवेदिनाऽग्रे प्रभाविनोऽनर्थस्य शङ्कया तन्दतोरहस्यमार्गाऽन्वेषणस्य प्रयत्नः कृतः।

"मित्रवर द्विवेदिन्! मया मिश्रेण सह ज्योतिः—शास्त्रमधीतमस्ति। किन्तु ……—…, तेन तु स्वमित्रमपि प्रतार्य स्वार्थसिद्धये भवतां वंशोऽपि समुन्मूलितः, अहो! स्वार्थस्य पराकाष्ठा! यदा मे भवता सह वार्ता प्रारभत, तदा मयैतन्निगदितं भवतस्तत्र लाभमन्वेषयता। अन्यथा मे किं प्रयोजनमासीत्! भवन्मित्रेण तु भवतो महाननर्थः प्रकल्पितो द्विवेदिन्!" इति मधुरवाचा पैशुन्यमार्गमनुसरता चतर्वेदिना तस्य हृदये स्वं प्रति विश्वासभावस्थापना कृता।

"चतुर्वेदिनः! सत्यमुक्तं भवद्भिः। नाऽहं करिष्ये तस्य पुत्रेण सह स्वपुत्री–विवाहम्। सन्ततिमरणाद् वंशनाशस्त्वभूदेव, तत्किमात्मनाशमपि कुर्यां तद्गृहे विवाहं कृत्वा सपत्नीकम्? भवद्भिरितः पूर्वं यद्यहं बोधितोऽभविष्यम्, तर्हि मम वंशोच्छेदो नाभविष्यत्। तदा मे भवता सह यस्मात्कस्मादपि कारणाद् वार्तालापविशेषस्य व्यवहारोऽपि नाऽऽसीत्। सहसा तस्मिन् दिने मे द्वे द्वे वार्ते भवता सार्धमापणिके सुसम्पन्ने। इदमपि शुभं जातं

यदधुनाऽप्यहं जागरितः, किन्तु यदा मम गृहिणी हस्तान्निरसरिष्यत्, तदा कोऽपि मे वार्तामपि नाऽप्रक्ष्यत् । "अर्थो हि कन्या परकीय एव" इति कालिदासोक्तिः सत्यैव । कन्यास्तु यावत्पितुर्गृहे निवसन्ति, तावत्पितुर्वंशंवदा भवन्ति । पतिगृहं गत्वा तु ताः पितुर्गृहस्य वार्तामपि न पृच्छन्ति । भवतामिदं बोधनस्य ऋणमाजीवनं न विस्मरिष्यामि । मिश्रमहं तु परमं मित्रमवाबोधं, परं स ईदृशः कपटी भविष्यति—इति विश्वासः स्वप्नेऽपि मे हृदये नासीत् । यादृशं तेन कृतं, तादृशं स फलमपि हि प्राप्स्यति, यदीहलोके नैव तत्फलमद्य भुञ्जे । गतं न शोचयेज्जनो भविष्यं च निर्मायात् । लोकेऽस्मिन् केनापि सह स्वसम्बन्धो नाधिकं वर्धितव्य इति निष्कर्षमद्याहं प्राप्तः । सर्वः स्वार्थं समीहते । नाशितोऽधिकं मया भवतामयममूल्यसमयः । तदर्थं क्षन्तव्योऽयं जनः कृपया । शुभचिन्तके जने सम्यग्व्यमज्यार्पितं खलु दुःखं सह्यवेदनं भवति । अस्मादयं निर्बन्धः ।" इति निगदता विषण्णहृदयेन लालापातिना पुनर्मौनमङ्गीकृतम् ।

"न कापि चिन्ता क्रियतां द्विवेदिन् ! सर्वमीश्वरः शुभं विदधाति । किन्तु श्रूयतां— यद्येतत्सर्वं हि श्रीमिश्रकर्णयोः प्रक्षिप्तं भवद्भिः. तदस्मात्स वैपरीत्यमेव यास्यति स्ववचनं सत्यमिव सिद्धयितुम्, यतो हि स ज्योतिर्ज्ञः । अतस्तत्रैतन्नैव स्फोटनीयं किमपि, षट्कर्णेषु भिद्यते हि मन्त्रः । द्वयोरावयो हृदययोरेव वृत्तान्त एष तिष्ठतु ।" इत्युक्त्वा चतुर्वेदिना स्वमार्गोऽग्राहि ।

   

(१४)

स्वस्तिकसदनान्निष्क्रम्य यदा चतुर्वेदी चलितः, तदैव स सम्मुखमागच्छता मिश्रेणाऽवालोकि । साम्प्रतमानन्दस्य पितु हृदयेऽनेन विश्वासेन स्ववासः कृतः – 'यदनेनैव चतुर्वेदिना मम मित्रं वैपरीत्यं नीतम् । अद्यापि कानिचिदनिष्टानि बीजानि वप्स्वाऽयं प्रयातिः' इति विचार्य कि-

ञ्चिदग्रे गत्वा– "किं भोः ! चतुर्वेदिन् ! सम्प्रति कुतः समायासि ? इत्यु-च्चैः सोऽवदत् ।

"कुतोऽपि न, स्वस्मादेव गृहादागच्छामि ।" इत्युवाच चतुर्वेदी ।

"किं, किञ्चिद् द्विवेदिनापि सह सम्भाषणम् ...... ? इति समन्दस्मितं निगदितं मिश्रेण ।

"बाढम् ! बाढम् ! कोऽपि विशेषस्तु न वार्तालापः, किन्तु .........," ।

"किन्तु ................ किम् ?"

"कमलाया विवाहाय क्रेयवस्तुविषयकं तेन किञ्चिदालपितम्, तदपि द्वारान्तः क्षणं स्थित्वा" इत्युपेक्षया सह वमित्वा चतुर्वेदिना किमपि पृष्टम्—"भवन्तश्च कुत्र प्रातः ।

"अहमपि भवता सह शाकपणिकं यावत् ......, इति कथित-मापणमार्गं प्रति हस्तेन निर्दिशता मिश्रेण ।

"किं व्यञ्जनानि क्रेतुं तदपि रिक्तहस्तीभूय ........." इति हसन्नुवाद चतुर्वेदी ।

"नहि, व्यञ्जनानि क्रेतुं तु न, केनचित् सह किञ्चिदालपि-तुम् ।"

"एवम्, एवम्, आगम्यतां तर्हि ।"

"किं काचिदपरापि वार्ताऽभूत्, चतुर्वेदिन् !" इति द्वित्राणि पदानि गत्वा पुनर्मिश्रेण कथितम् ।

"तन्नैव काचित्, परन्तु ...........,"

"संकोचं मा कार्षीः, सुस्पष्टं कथयस्व ।"

"तदेव, यन्मया पूर्वमुदितम् । कमलाया विवाहाय सम्प्रति चिन्ता विशेषतः क्रियते । पुत्रशोकोऽपि तत्र प्रबलः । स्वभावस्तु तेषां सरलः । यत् किञ्चिदुच्यते केनचित्, तत्सर्वमपि तेन स्वीक्रियते । ईदृशा जनास्तु लोके

विरला एव जायन्ते। भवन्तस्तु मित्रपदमलङ्कुर्वन्ति। अतो भवत्सकाशात् तेषां किं गोपनीयमस्ति? विवाहोऽपि भवतां पुत्रेण सह निश्चितः।" इति ब्रुवाणो मुखेन प्रसन्नतामद्योतयच्चतुर्वेदी।

"आमेवम्, आमेवम्" इति कथयन् शङ्कितमना मिश्रः शाकापणं प्राविशत्।

चतुर्वेदी च—"कुतोऽयमापतितः साम्प्रतिके शुभमुहूर्तके? सार्धैकवर्षतो निरन्तरं प्रयतमानस्य मे कार्येऽद्य साफल्यस्य कानिचिल्लक्षणानि प्रतीयन्ते। अधुनाऽहं रमेशस्य विवाहं कमलयैव सह कारयित्वा शान्तिं ग्रहीष्यामि। यतो हि स हठधर्मी बहुधा बोधितोऽपि तयैव सह परिणयं कर्तुमीहते।

किन्तु ........., कमलाऽऽनन्दमेव कामयते, सा तेनैव सह निरन्तरमुपवनानि परिभ्रमति। द्वयो र्मेलनं भवत्येव। अत्रापि बाधा पातयिष्यते, तदैव मम कार्यं सेत्स्यति। पुनस्तयो र्वियोगेन कियता विरहितदुःखेनाऽभिभविष्यतो हृदये? इति भुक्तभोगिना विना केन ज्ञातुं शक्यते? कमलया तु सम्प्रति रमेशं प्रति स्वमुखमपि न क्रियते, परं स्वनिश्चयं स परिवर्तयत्यपि न।

विमलया सह तस्मिन्नेव वर्षे रमेशस्य विवाहः सुनिश्चितोऽभवत्, परं तेनाऽस्वीकृतः सः। अन्यथेत्थं दुष्प्रयत्नस्य काऽऽसीदावश्यकता?

पितुर्हृदयं पितरं विना को नु जानाति? न जाने, स स्वपुत्रस्य कृते किं किं न करोति? तत्र ममेदं कार्यं तु सामान्यमेव। विवाहस्तु तस्य करणीय एव, कयापि सह भवेत्? किन्तु ......, रुचिं विना यत्पाणिग्रहणं भवति तद् गृहे कलेरेव वासः।

परं ............, 'कामी स्वतां पश्यति'। अन्येन तस्य किं प्रयोजनम्? अतस्तेन स्वयौवनमदेन तथा कमलायामासक्ततया मम सामाजिकस्थितिरपि नावलोकिता। अहो! मे दुःखितं मनः।

साम्प्रतिकी सन्ततिः किमीदृशी ? सर्वदा सर्वथा च या स्वानुकूल्यमीक्षते, न कस्यापि वार्तां शृणोति मन्यते च नो। नैव, नैव। गृहे त्वन्येऽपि पुत्राः सन्ति, परमेतादृशस्तेषु न कोऽपि। अयमेव प्रभावः सहशिक्षायाः।

श्रीवल्लभेन मनसि न जाने किं किं विचिन्तितं भवेत्, यदा तेन ममाऽस्वीकृतिराकर्णिता। विमलायाश्च हृदयेऽपि तदा किं वोतमासीत् ? यतः सा रमेशमैच्छत् सर्वथा। अत्र कालिदासोक्तिः—'श्रिया दुरापः कथमीप्सितो भवेत् ?' इति तु नैव सङ्गच्छते।" इत्थं मुहुर्मुहुःस मनसि चिन्तयन् स्वमार्गमग्रहीत्।

   

(१५)

सन्ततिशोकेन सन्तप्तदेहस्य, तत्रापि मिश्रकापट्यमाकर्ण्य विषण्णमनसो विदीर्णहृदयस्य च विकृतमुखाकृते र्लालापतेः स्वान्ते चतुर्वेदिनः पिशुनवचसा सश्रद्धं विश्वासगृहं निर्माय तत्रोषितुं प्रारब्धम्। तेन कमलाया मातुरपि स्रवसो वृत्तमेतत्प्रक्षिप्तम्। तया क्रोधमानीय —"सर्वमेतद् भवतां मित्रताया एव फलम्, येन मे सर्वनाशोऽभवत्, तेन सह कमलाया विवाहो नाऽधुना भवेत्" इत्यवादि। लालापतिनापि हुङ्कारेण तत्स्वीकृतम्। सम्प्रति न किञ्चिदपि तस्मै शोभन प्रतिभाति। आकाशवाण्याः सङ्गीतश्रवणाय स कक्षं गतः, परं तत्रापि तन्मनो न मिलितम्। सायंकालं यावद् मिश्रेण सह द्वंद्वीकृता वार्ता न भवेत्, तावदधुना तु तस्य हृदये क्व शान्तिः ? परं सन्ध्याकालस्तु नैवास्ति सन्निकटः। अतः शीघ्रमस्मिन्नेव समये तत्र गन्तुं निश्चित्य लालापति मिश्रस्य गृहमार्गमग्रहीष्ट।

तीर्थेशभवनं प्राप्य गृहाजिरे स्थित्वा—"क्व गतवान् आनन्दपिता भोः।" इत्थं कर्कशगिरा स न्यगादीत्। "अयमागच्छति, गङ्गास्नानाय गतः" इति श्रुत्वा "आनन्दश्च क्व गतः ?" इति पृष्टे "सोऽपि कमलया सह भवतामेव गृहम्" इत्याकर्ण्य ततोऽपि चचाल। लक्ष्मीस्तत्र स्थातुमाग्रहविशेषं

न कृतवती। तया हि तद्वाण्या व्यज्ञायत—"यदद्य किमप्यनिष्टं प्रतिभाति। मिश्रः प्रतिदिनं गङ्गास्नानाय गच्छति। तत्रैव वराहघट्टे पूजापाठमपि विदधाति।" इति सर्वं द्विवेदिनो नाऽस्त्यविदितम्।

मार्गे पन्थयन् कश्चिदपृच्छत्—

"क्व गम्यते कमलापितः!"

"कुत्रापि न!

"भो भो द्विवेदिन्! कुत्र, कुत्र सम्प्रति?"

"वराहकुण्डं गच्छामि।"

"कथमियती त्वरा भोः?"

"मिश्रेण सह किमप्यावश्यकमालपितुं हे!"

इत्थं पारस्परिकवार्तालापमाचरन् स वराहकुण्डं प्राप्नोत्।

"एहि, एहि द्विवेदिन्! किमद्य गङ्गास्नानाय कष्टम् ......," इति प्रसन्नमनसा गङ्गाजले शरीरं मर्दमानेन मिश्रेण कथितम्।

"अहं त्वया सह द्विखण्डवार्तामालपितुमागतोऽस्मि। त्वादृशः कपटी धनलुब्धश्च मे दृष्टिपथमद्यावधि न कश्चिदागतः।" इति सर्वोच्चपङ्क्तौ तत्र तिष्ठन् मुखाकृतिं सभ्रूभङ्गं विकृत्य परुषवचसा द्विवेदी जगाद।

"किमुक्तम्? वाणीं संस्कृत्य व्यवहरतु भवान् किं सदोन्मत्त इव .........," इति स्नानं विस्मृत्य तत्राऽधःपङ्क्त्यामुपविश्य विनम्रतया मिश्रोऽब्रवीत्।

"उन्मादव्याजं मा बोधीर्मिश्र!" इत्युच्चैः स्वरेण वदतो द्विवेदिनो वचने पारुष्यमासीत्।

"तर्हि किं कथनीयं ते द्विवेदिन्!" इत्यासीत् प्रतिवदतो मिश्रस्य वाण्यामल्परोषः।

"तदेव कथनीयं मे यन्मया पूर्वमुक्तम्।" इति तीव्रताऽऽसीद् वाचि द्विवेदिनः।

"किमुक्तम् ? स्पष्टमद्य कथयस्व ! स्वमित्रे दुःशङ्कमानं त्वां लज्जापि न बाधते।"

"स्वमित्रे !"

"आम् !"

"अहमधुना त्वां मित्रं न मन्ये।"

"कथमेतत् ?"

"मित्रेण किमित्थं कपटिना भवितव्यम् ?"

"कपटं मदीयं कथन्न प्रकटीक्रियते ?"

"किं प्रकटीकुर्याम् ? तत्तु त्वं ज्योतिर्हृदयो जानास्येव।"

"किं त्वदीयो मयि विश्वासोऽपि नाऽवतिष्ठते ?"

"विश्वासः किं त्वादृशे धनलोभिनि कपटिनि जने कर्तव्यः ?

(सक्रोधम्) "वाणीं संस्कृत्य व्यवहर द्विवेदिन् ! पुनस्त्वयाऽहं कपटी धनलोभी च कथितः।"

(तारस्वरेण) "तदहं त्वां कं कथयेयम् ?"

(सक्रोधम्) "मया कस्यापि सन्निधौ हस्तौ न प्रसारितौ। तत्रापि त्वं मां 'धनलुब्धः, कपटी' इति कथयसे। मित्रताऽपदेशको मा भूः, येन मिथ्याभियोगमारोपयसि। किं बहुना ? स्वाभिमानरक्षणाय सर्वमहं त्यक्ष्यामि। अवहितो भव मुखादीदृशं दुर्वचनं न कदापि निस्सारयेः।"

(सक्रोधम्) "अन्यथा किं कारिष्यसि ?"

'सत्सर्वं, यत्त्वं स्वदुर्व्यवहारेण कारयिष्यसि।"

"त्वमेव कारयसि।"

"नाहं, तत्र चतुर्वेद एव मूलम्, येन त्वमित्थमुत्साहितः, तमपि द्रक्ष्यामि, सोऽतीव कर्णेजपो भवति।"

"तं किं द्रक्ष्यसि ? यदि स एव मूलमस्ति, तदावयोरद्य मैत्री विच्छिन्ना भवति।"

"भवेत् तावद् विच्छिन्ना मैत्री, नाऽस्य चिन्ता मे मनसि ।"

"तर्हि स्वपुत्रमानन्दमवरुन्धीथाः, यत्स कदापि विस्मृत्यापि मे गृहं नाऽऽगच्छेत् ।"

"आम्, तमवरुन्धे । नैव कदापि स ते गृहं गमिष्यति । किन्तु कमलां त्वमवरुन्द्धि ।"

"सा किं विनाऽऽज्ञां तव गृहं गमिष्यति ?"

"इदं तु भविष्यद् वदिष्यति ।"

"तदपि द्रक्ष्यामि ।"

"अस्तु तावद्, अधुना तु कृष्णमुखो भव ।"

"मामित्थं कथं वदसि रे ! दग्धमुख ! कपटिन् !"

"किं युयुत्सया त्वमत्रागताऽसि रे नीच ! कुसीदक ! रे वंशहीन !

"नीचोऽसि त्वम्, तव च ते पितरः ------... । चलितोऽसि धनलोभी परम्परागतमित्रतां स्थिरीकर्तुं पुत्रस्य विवाहेन ।"

"किं पशुमारं मरिष्यसि रे श्वशुर !"

"किं श्यालक ! त्वमेव मारयिष्यसि ? अन्योऽपि हस्तौ धारयति ।"

(तारस्वरेण) "अहमधुना त्वां ताडयिष्यामि ।"

(उच्चैः स्वरेण) "किं त्वं ताडयिष्यसि ?"

"आम्, अहं ताडयिष्यामि ।"

"तर्हि ताडय, ताडय ।"

"तिष्ठ, तिष्ठ, ताडयामि ।"

"आगच्छ, आगच्छ, नैव बिभेमि ।"

इति श्रुत्वा मिश्रो द्विवेदिनं प्रति धावितः । द्वयोश्च हस्ताहस्ति युद्धं बभूव । जनास्तत्रागत्य—"भवन्तौ तु बुद्धिमन्तौ स्तः । मित्रे अपि युवां कथं पारस्परिकं कलहं कुरुतम् ? इति कथयन्तस्तौ पृथक्पृथगकुर्वन् ।ततः स

द्विवेदी 'नायं मे मित्रम्' इति प्रजल्पन् पपन्थ ।

मिश्रश्च स्नात्वा वस्त्राणि च परिधाय गृहमायातः । तौ गृहं गृहं गत्वा स्वां स्वां गृहिणीं तत्रत्यमखिलवृत्तमश्रावयताम् । तयोरन्योऽन्यस्य गृह-गमनं प्रकृत्यैव निरुद्धमधुना । स्वीयं प्रमादं न मन्यमानौ पारपरिकगेहमार्गेण गच्छन्तावपि वार्तामपि नाऽऽलपताम् । यो वार्तामाचरिष्यति, तस्य मानंमन्यस्य हृदये न किमपि भविष्यति । मित्रतास्थाने द्वेषेण प्रेमस्थाने च घृणया तयो-र्हृदये प्रपीडिते । यदि पुनर्द्वयो वार्तापि भवेत् तर्हि मैत्री कुतः ? रज्जौ खण्डितायां ग्रन्थिर्जायते । सम्प्रति द्वयोः स्मृतिपटले—

"मित्र ! द्विवेदिन् ! कीदृशोऽयं सुन्दरो मयूरो नृत्यति, पश्य, पश्य, पुष्पाण्यपि मनोहराणि सन्त्यस्मिन्नुद्याने ।" "आगच्छ, मिश्र ! आगच्छ, वादितमत्र सायं होराषट्कम् । सम्प्रति शीतं वर्धते गृहं गच्छाव ।"

"चलावः । इयती का त्वरा ? तावदमुं मृगशावकं लोकस्व ! अहो ! कियानयं सुन्दरः ?" इति वनभ्रमणम् ।

× × × ×

"गङ्गास्नानं सम्प्रति ग्रीष्मकाले कियन्मनोहारि ? आप्रातरा-सायमत्रैव गङ्गामावां स्नाव, विचारोऽयं मनसि प्रवर्तते ।"

"अलमतिस्नानेन, एहि, सन्ध्यामुपासावहै" इति गङ्गासेवनम् ।

× × × ×

"सुहृद्वर ! श्वोऽहं प्रयागं प्रातर्नवघटितकालस्य वाष्पयानेन गन्तास्मि । अतो भवतोऽपि सहोपस्थितिमीहे ।"

"नहि, नहि, मिश्रबन्धो ! अत्र मम कार्याधिक्यम् । नाहं गन्तुं समर्थः ।"

"नाहं स्वीकरोम्येतत् । भवता गमनीयमेवति भविष्यति मया सह ।"

"अस्त्वेवम् !" इति सहयानम् ।

× × × ×

"अहो धारासम्पातोऽयं वृष्ट्याः। सम्प्रति क्व गम्यते त्वया मित्र ! अत्रैव किञ्चिद् भुञ्जीथाः सह मया। एहि द्विवेदिन् ! एहि महानसम्।"

"कारवेल्ले लवणं तु न्यूनम्।"

"मूलके मरिचानि नोपयुक्तानि।"

"आलुकपटोलयोः शाकं तु भक्षणीयम्, पश्च, कियत्स्वादिष्टम् ?"

"माषगर्भास्तु स्वादयुक्ता एव।"

"संयावश्च ?"

"संयावस्तु मनोरमो द्विवेदिन् !"

"किन्तु ......................., रसाला सर्वसुन्दरा मिश्र !" इति सहभोजनम्।

× × × ×

तथा च तानि तानि बाल्यस्य, तारुण्यस्य हस्ताहस्तियुद्धाच्च पूर्वमवस्थाया उत्तरार्द्धे पदमर्पयतः समयस्य दृश्यानि शनैः शनैः गतागतक्रियया स्वमुद्रामङ्कितवन्ति। परमधुना किं भवेत् ? पश्चात्ताप एव मुख्यं तत्समाधानम्।

❋ ❋ ❋ ❋

(१६)

रमेशस्य पितुर्हृदये महांस्तदा प्रमोदोऽभूत्, यदा तेनाऽऽकर्णितं कर्णपरम्परया— 'मिश्रद्विवेदिनोः मैत्री विच्छिन्ना' इति। तस्याऽऽसीच्चित्तमतिप्रसन्नम्। मिथ्याभाषणेन पूर्णतया साफल्यप्राप्तेरयमेवाऽऽसीत् तस्य प्रथमकालः। इत्थमेव तेन कदापि रमेशस्याऽभिलाषोऽपि पूरयिष्यते—इति तन्मनसि विश्वासोऽपि सञ्जातः। पुनर्द्विवेदिगृहे प्रत्यहं तस्य गमनागमनेन मैत्रीसूत्रमपि बद्धम्। अथ किम् ? तस्य विश्वासे नासीत् कश्चिदपि

सन्देहलेशः।

कमलानन्दयोः प्रेम्णि नापतत्कश्चिदवरोधः। मातापितरावरो-धनस्य बहून् प्रयत्नानकुर्वाताम्, परं सर्वं व्यर्थमभूत्। नक्तन्दिवं तयोः प्रणयो नूतनतामेव लभते स्म। पुनस्तत्र न्यूनताया न कश्चित् प्रश्नोऽपि भवति। पितृभ्यामन्योऽन्येन सह सम्मिलितुं कमपि विषयमवलम्ब्य वार्तामाचरितुं च निषेधितावपि तावन्योऽन्यस्य गृहं न गत्वा यथासमयमुद्यानेष्वमिलताम्। तयोः साम्प्रतमाचार्यकक्षाया अन्तिमखण्डमासीत्। अतस्तत्र विद्यालये तयोर्मेलनं स्वाभाविकम्। गङ्गोपवनेऽपि तौ यदा कदा यथासङ्केतं मिलतः। मार्गे तु नित्यम्—

"आनन्द! पूर्वन्तु शास्त्रिकक्षायां, यदा विमलायाः प्रणयलोभेन त्वं रमेशेन सार्धं निरन्तरमध्ययनं करोषि स्म, तदाऽऽवामन्योऽन्यस्य विरोधि-नावास्व। परमिदानीन्तु ...................."।

"कथयस्व कमले! द्वयोरधुना प्रेम सम्पन्नम्।"

"कीदृशं प्रेम?"

"तादृश, यादृशं पतिपत्न्यो र्भवति। त्वया विना तु मे मनः सर्वथा व्याकुलीभवति हृदयं च शान्तिमपि न याति।"

"कथमित्थमुपहससि?"

"नहि, नहि, कमले! सत्यं वदामि।"

"अस्तु, कथय, कथय, आवयो र्वियोगस्तु नो भावी!

"वियोगस्तु प्रेम्णो मुख्यनिकषः कमले! तमन्तरेण तत्र कथमानन्दः?"

"परीक्षायै सर्वदाऽहमुद्यताऽस्मि।"

"द्रक्ष्यामि तदा।"

"भवाननुत्तीर्णो न भवेद् आनन्द!"

"नायं तादृशो जनः, यः पाणिं गृहीत्वा त्यजेत् कमलाम्!

"तत्पुनः किं भावि ?"

"तदेव, यत्प्रेम्णा भवति ।"

"किं भवति ? अहमपि श्रृणुयाम् ।"

"विवाहः ।"

"विवाहस्य वार्ता तु मम जनकेन केनचिदपरेण सह क्रियते, नाऽधुना तव पित्रा साकं हस्ताहस्तियुद्धात् – इति मे श्रुतम्, आनन्द !"

"आम् ! अस्मादेव तव पितु र्वैमनस्यादावयोस्तु विवाहोऽप्यवरुद्धः । यदि तदानीं तव भ्रातुर्निधनं नाभविष्यत्, तर्ह्यद्य विषमेयं समस्या समक्षं नागमिष्यत्, या साम्प्रतमेकं कथानकं निरूपयति कमले ।"

"तर्हि किमधुना कर्तव्यम्, आनन्द !"

"कमले ! त्वया स्पष्टं निषेधितव्यम् – यदहमानन्दं विना न केनापि सार्धं विवाहं करिष्ये ।"

"किमित्थं निगद्याऽहं नारीशिरः कलङ्कयेयम् ? किं कदाचिन्नार्या इत्थं कृतम् ? स्वतो न कस्यापि पाणिर्नार्या गृह्यते ।"

"सङ्केतस्तु क्रियते ।"

"तादृशमेवाहमपि करिष्ये, येन त्वया विना न केनाऽप्यहं प्राप्या भवेयम् ।"

"कः स उपायः ?"

"तमधुना न कथयिष्ये । स तु यथाकाल दृष्टिगतो भवेत् ।"

इत्थमासीन्नवनवान् विषयानुद्दिश्य वार्तालापस्य तयोर्नियमः ।

   

(१७)

विमला त्वियती सुन्दरी नासीद् यादृशी कमला । अत एव यौवनारूढापि विमला न कमपि छात्रं स्वां प्रति मोहयितुं समर्था, किन्तु

कमलायाः सौन्दर्येण सर्वेऽपि समाकृष्टाः। को नाम छात्रस्तां स्वसहचरीं विधातुं नेच्छति, तत्र रमेशस्तु मुख्यः। कस्मिन्नपि तया दृक्पातो न क्रियते। परं ········, आनन्दस्य नव्यगीतेषु त्वियती विमुग्धा सा जाता यत् तेन सह दाम्पत्यमिवाऽऽचरति। पुनस्तस्य तया सह तदाचरणं नैसर्गिकमेव। तदित्थं तयोः प्रेमाणं विलोक्य सहपाठिनो विद्यार्थिनस्तौ 'कमलानन्दः' इति नाम्ना सम्बोधयन्ति। कमलानन्दयोरेवंविधं प्रेमाचरणमवलोक्य रमेशोऽन्तर्दहति। कमलां स स्वजीवनस्य सहचरीं कर्तुमभिलषति। अतस्तेन तयोर्जनकयोश्चिरमैत्री विच्छेदिता स्वपितुः पिशुनमार्गेण। वंशाभावे क्व वेणुध्वनिः? परमायसवेणुस्तु ध्वन्यते नूनमिति स किन्न जानीते? किन्तु प्रयत्नस्तु मनुष्यस्य मुख्यधर्मः! तं स कथं त्यक्तुमर्हति कमलानन्दः? 'कमलानन्द' इति नाम्नः संस्करणमपि रमेशेनैव विहितं पूर्वमीर्ष्यया। ततोऽनेन नाम्ना नगरे त्वियतो ख्यातिर्लब्धा, यदुक्तशब्दं श्रुत्वा को नाम तत्प्रेम न परिचिनोति? यादृशं तयो र्हृदये स्वनाम्नो मिश्रितशब्दमाकर्ण्य सुख भवति, तादृशमेव तज्जनकयो र्हृदये दुःखम्। परमित्थं भवति किम्? मदान्धं भवति नारीप्रेम। तत्समक्षं न कस्यचिद् बलम्। यन्नैव प्रतीक्षते किमपि सह नेतुं, स्वयमेवाऽन्वेषयति च स्वमार्गं हि गन्तव्यम्।

एकदा कमलया सह परिभ्रम्य गृहमागत आनन्दः। स्वकक्षमध्यान्निस्सरन्तं शब्दसंकेतमधिगत्य स तत्रैव गुप्तो भूत्वा यत्किमप्यश्रोषीत्, तत्सर्वं तस्य पितरौ परस्परमित्थमालपताम् —

"किं ज्ञातमस्ति भवताम्? इदानीं पुत्रस्य किमायुः? तस्याऽधुना वर्षाणां द्वाविंशतिर्व्यतीता, किन्तु भवन्तं नैव बाधते तस्य विवाहस्य चिन्ता।" इत्थं लक्ष्मीरुवाच।

"विचारयामि, नैव भवति केषाञ्चित्पुत्रीमतामागमनमपि। करवाणि तु कथम्?" इति कथितं मन्दस्वरेण मिश्रेण।

"श्रीवल्लभः स्वपुत्रीं विवाहयितुमागतस्तु, किन्तु भवता स्वमुखात् कश्चिद् हुङ्कारोऽपि न त्यक्तः। अयमेव विचारो विवाहस्य ?

"नगरे तस्य विवाहं न विधास्यामि। कमलां विहाय स किं तया सह विवाहं कार्मायिष्यते ? स च तां विमलामीहतेऽपि न।"

"द्विवेदिना सह वैमनस्यं जातम्। भवता तदानीं हस्ताहस्ति करणीयं नासीत्। किं सोऽधुना विवाहं करिष्यति ? इति लक्ष्म्या किञ्चिदुच्चैरुक्तम्।

"स स्वप्नेऽपि विवाहं न करिष्यति। चतुर्वेदिना पैशुन्यमीदृशं कल्पितं, येनाऽऽवयो मित्रतापि विच्छिन्ना। मया स पूर्वं बहुवारं बोधितोऽपि द्विवेदी किमपि नामन्यत। ततश्चतुर्वेदिनापि सह मे लगुडालगुडि तस्मिन् दिनेऽभूत्, येन शत्रुसूत्रमपि बद्धम्। सर्वमिदं विदितं त्वया। पुनरहं किं करवाणि ?" इत्युच्चैः प्रवदता मिश्रेणापि तत्र परवशता प्रदर्शिता।

"चाटुमार्गेण मैत्री पुनः स्थाप्यताम्, येनाऽऽनन्दस्य विवाहः कमलया सह भवेत्। चाटुकार्येण भवतां किमप्यनिष्टन्तु भविष्यति न !" इति मन्दवाण्या मिश्रं निवेदयन्ती लक्ष्मीः कथितवती।

"येनाऽहं धनलोभी कपटी च कथितः, तस्य चाटुकारितां कुर्याम् ? आनन्दस्य विवाहो भवेन्न वा, परमित्थं स्वाभिमानविरुद्धं नाऽऽचरिष्यामि।" इति स्तोकं कोपं कृत्वा विमना मिश्रः कथितवान्।

"भवतां स्वाभिमानस्येदं फलं यन्मे पुत्रस्य विवाहो नाभूदद्यावधि। अधुना भवदुक्तं नेषदपि मंस्ये, शीघ्रतया च तत्परिणयं करिष्ये।" इत्थमीषत्क्रुद्धेव प्रजल्पन्ती सा कक्ष्यातो बहिरगच्छत्।

ततः कक्षे पदमर्पयन्तं पुत्रं पिताऽद्राक्षीत्, तं चेत्थमवादीत्—

"आनन्द ! क्व गत आसीः ?"

"न कुत्रापि पितः ! रामचन्द्रं मिलितुम्।"

"आम् ! रामचन्द्रोऽपि काव्यं प्रणयते, कीदृशं लिखति ?"

"स सुन्दरमेव कवयति ।"

"अस्तु, तावत्किमपि गीतं श्रावय, यत् तुभ्यं विशेषतो रोचताम्, आनन्द !

"अस्तु, श्रूयतां पितः !" (आनन्दो गीतमेकं गायति) —

अभिशापानामस्मिँल्लोके
कुर्वेऽहं नूतन–निर्माणम् ।

( १ )

अश्रुवृष्टयो मृतकशरीरं यत्र यदाऽऽवृण्वन्ति ।
जीर्णवशनतः परवशलज्जा दृष्टिं निपातयन्ति ।।
तत्र वेदनातन्तुभिरेव कुर्वे व्रणे सूत्रसन्तानम ।
अभिशापानामस्मिँल्लोके कुर्वेऽहं नूतननिर्माणम् ।।

( २ )

दृष्ट्वा चिन्तिततनूं चिन्तया स्वयमेकत्र चिन्त्यते ।
यत्र मरणदृश्यं विलोक्य हा ! मृत्युर्भयं मन्यते ।।
हलाहलप्रतिपानग्रासे तत्र हि कुर्वे सुधाप्रदानम् ।
अभिशापानामस्मिँल्लोके कुर्वेऽह नूतननिर्माणम् ।।

"एवम्, एवम्, किमग्रे भूयः ?" इति पितृवचनं निशम्य पुनरानन्दो गीतस्याऽन्तिमं पद्यं श्रावयति —

मम गीतेषु सन्ति सङ्कुलिताः प्रतियुगस्य ह्यभिलाषाः ।
अधिभाषं गीतेषु विद्यते जीवनस्य परिभाषा ।।
तदज्ञतायां प्रलयस्याऽतो यदा कदा कुर्वे स्मितदानम् ।
अभिशापानास्मिँल्लोके कुर्वेऽहं नूतननिर्माणम् ।।

—

"सुन्दरं, सुन्दरं गीतमिदं परमं मनोरमम् । आनन्द ! त्वयैतत् कदा लिखितम् ?"

"अक्तोवरमासे पितः !"

"यदित्थमेव त्वं गीतानि लिखेस्तमाम्, तर्हि ते कीर्तिर्विश्वव्याप्ता भवेत् ।"

"यथाऽयं भवतामाशीर्वादः ।"

(विषयान्तरमुद्दिश्य) "आनन्द ! परीक्षायां सम्मिलितुं तव पक्षंकः शेष. ?"

"आं पितः !"

"सम्यक्परिश्रम्य विषयमर्धं.स्य साहित्याचार्यो भव ।"

"गुरुजनानामनुकम्पया सर्वं शुभमस्ति पितः !"

"पुत्र ! यदि त्वं मन्वीथाः, तत्किमपि कथयेयम् ?"

"कथ्यतां पितः ! का वार्ता ?"

"यदि विमलया सह तव वि वा हः ..........., ।"

"नहि, नहि, पितः ! सम्प्रति मे विवाहविषये चिन्ता न कार्या । पुनश्च सा विमला त्वस्मादृशस्य कुलीनस्य गृहस्य योग्या कुतः ?"

"अयमेव मम विचारः । तस्यास्तु कलङ्कितं कुलम् ।"

"अथ किं पितः ! भवन्तस्तु शिक्षिताः । अयञ्च शिक्षायुगः । परमेते कथं निर्बला विचाराः ?"

"तव मातुः कारणादीदृशं मयोक्तम् । तव माता पुत्र ! तव विवाहचिन्तया नितरां प्रपीड्यते । सा तव विवाहमधुना शीघ्रमेव कर्तुमीहते । कमलया सह तव विवाहस्य नास्ति काप्याशाऽधुना ।"

मध्ये लक्ष्मीरागत्य किमपि कथयामास —

"किं स्वपुत्रस्य कवितामेव श्रोष्यसि ? किं वा किमपि भोक्ष्यसे न वा ?"

"आनन्द ! एहि, किञ्चिद् भुञ्जीवहि।" इति पुत्रं कथयन्, स्वपत्न्या विकृताकृतिं विलोकयन् मिश्रो महानसं प्राविशत्।

   

(१८)

"पद्मे ! पद्मे ! ए कमलामातः ! एहि, अत्रागच्छ, पश्य, शीघ्रं पश्य, कमलाया मातुलः सपत्नीकोऽयमागतो द्वारि तिष्ठति" इति लालापतिरुच्चैरुवाद।

"इयमागता भोः !" इति कथयन्ती सा कमलया सह धाविता, द्वारञ्च गत्वा त्रयोऽपि जगदीशाय स्वागतं व्याजह्रुः। कमलया मातुलीहस्ताच्छिशुः स्वाङ्के गृहीतः। अद्य साऽत्यन्तं प्रसन्ना। मोहनात् पश्चात् स्वक्रोडे स्तनन्धयशिशुग्रहणस्य तस्या अयमेव प्रथमदिवसः। मन्ये, सा कथयति स्म—"अहमपि शिशुजननयोग्याऽस्मि, परं पिता मे विवाहमपि न विदधाति।"

कमला वारं वारं शिशुं मुखेन चुम्बति, सा तमुद्गमयति हस्ताभ्यामाकाशे, कदाचिदुपवेशयति भूमौ, कदाचिदुत्थापयति स्कन्धे, कदापि सञ्चालयति करयोश्च। कदाचिच्च तस्य हुङ्कारेण हुङ्कृत्य सा प्रेम्णा वदति,

"किं नामधेयन्ते भो वत्स ! त्वमत्र कर्णपुरादागतोऽसि ! मातुलानी त्वां ताडयति तु न ! यदि ताडयति सा, तर्हि त्वं मां कथयेः, तामहं सम्यक् ताडयिष्यामि ।"

कदाचिच्च तं शिशुं रुदन्तमवलोक्य कमला वात्सल्येन ब्रवीति—"मा रुदिहि, मा रुदिहि वत्स ! त्वं तु मम भ्राताऽसि, भ्रातृकोऽसि। अहं त्वदीया पितृस्वस्रीया स्वसा, कमला च नाम । किं त्वदीयं नाम रामः श्यामो वा ? कथय, कथय । नैव कथयिष्यसि, तर्हि मा रोदः । कस्त्वां ताडयिष्यति, मातुलो मातुली वा, मा रुदः । त्वमत्रैव मया सह निवस, पुत्रोऽसि, जागदीशोऽसि । नाऽहं त्वां गमयिष्यामि कर्णपुरमधुना, प्रियोऽसि, प्रियतमोऽसि ।"

सुरेशस्य पत्नी कमलायाः कोडे क्रीडन्तं शिशुं विलोक्य मोहनं स्मरन्ती हृदयान्तर्भृशं हि रुरोद । पञ्चषाणि दिनानि जगदीशस्तत्र न्यवसत् । यदानीमेकस्मिन् दिने स ततो गन्ताऽऽसीत्, तदा लक्ष्मीः पुत्रीविवाहमुद्दिश्य स्वभ्रातरमाललाप । एतदर्थमेव स तया पत्रेण समाहूत आसीत् । तयोः मध्ये तदानीं लालापतिरपि तत्रैवोपविष्टः ।

लक्ष्मीः — भ्रातः ! विंशति र्होलिका गताः । तावकीयं भागिनेयी सम्प्रति सर्वविधेषु सांसारिकेषु कार्येषु दक्षा विवाहयोग्या च । पुरा तु कन्यानां द्वादशवर्षीयावस्थायां विवाहाः सम्पद्यन्ते स्म, परमाधुनिके शिक्षायुगेऽस्यां दशायां तु परिणया हि विधातव्याः ।

जगदीशः — किमद्यावधि कोऽपि विवाहयोग्यो वरो न दृष्टो भगिनि !

लक्ष्मीः — तावकीनो भगिनीपतिस्तु साम्प्रतं मौनमसाधयत् । मन्ये, न कापि चिन्ता वर्तते तस्य मनसि, भ्रातः !

जगदीशः — कथमौदासीन्यमीदृशं भगिनीशपादानाम् ? कमलां तावच्छीघ्रं यिवाहयन्तु भवन्तः ।

लालापतिः — कमलामहं स्वनगरे विवाहयितुमिच्छामि । येन वयमपि सुखिनो भवेम । (साश्रुनेत्रम्) पुत्रशोकस्तु नितरां बाधतेऽस्मान् । ततस्तु मोहनोऽपि ............ गतः यत्राऽस्माकं .......... आशाऽऽसीत्, सोऽपि ............... गतः । अहो ! विचित्रेयं भगवतो लीला । एतावद् धनं, सुन्दरमीदृशं सर्वतोभद्रं स्वस्तिकसदनं, तैलरथश्च यः प्रकोष्ठेऽस्ति पतितः, सर्वमेतद् व्यर्थं तनयं विना । परमधुना सर्वा आशा नः कमलायामेव । सर्वमेतत् तदीयमेव । वरम्, ......... आनन्दसदृशं नाऽन्यं प्राप्स्यामि, किन्तु ............... मैत्री विच्छिन्ना । पुनस्तस्य योगोऽप्यस्माकं विघातकः, यस्याऽयं प्रभावोऽस्ति, श्यालमहोदय !

जगदीशः — कस्मान्मैत्री विच्छिन्ना ! अहमपि तु शृणवानि ।

लालापतिः — आनन्दस्य पिता श्रीफुल्लसहायमिश्रो मम परमं मित्रमभूत् । परमद्य ............ तु ............ । (इत्थमाद्योपान्तं स सर्वं वृत्तमश्रावयत् ।)

जगदीशः — किमेवम् ? भगिनीश्वर !

लालापतिः — वस्तुतः सत्यं जानीहि श्यालकमहोदय ! पूर्वन्तु मम गृहम् आनन्दो नाऽऽयातिस्म । तदानीं सर्वे वयं सर्वथाऽऽस्म सकुशलाः । किन्तु, यदा तेनाऽत्र स्वपदमर्पितं, तदैवात्र विपत्तिरागता । अधुना पुनस्तस्याऽऽगमनाऽवरोधात्सर्वमत्र कुशलम् ।

जगदीशः — अहो ! महदाश्चर्यमेतत् ! ईदृशोऽयं योगः ? तर्हि स दर्शनीयः । कीदृशी तस्य मुखाकृतिः ?

लक्ष्मीः — भ्रातः ? स आकृत्या मनोरमः, सर्वाङ्गसुन्दरः, सहजस्नेहः, सर्वथा योग्यः, कमलायाः सहपाठी चासीत्, यो विशेषयोग्यतया संस्कृते नव्यगीतप्रवर्तकः, कुलीनः कमलायाश्चाऽभीप्सितोऽप्यभूत् । परं तद्योगप्राबल्यादस्माकं स विघातको जातः ।

जगदीशः — पुनः कश्चिदपरो द्रष्टव्यो भगिनि !

लालापतिः — (मध्ये) पश्यामि तावदन्यं परिणेयम् । रमेशरामचन्द्रयो मंध्ये को योग्यः कमलाया मातः !

लक्ष्मीः — कार्यमिदं स्वभ्रात्रे समर्पये । तयोः को योग्यतर इति स्वेच्छयाऽयमेव निर्वाचयेत् ।

जगदीशः — चल्यतां तावद् दर्शय तौ स्वस्रोशचरण !

लालापतिः — एहि, चलाव, जगदीश !

   

( १९ )

तौ द्वौ भगिनीश्वरश्यालौ प्रथमं तु रमेशस्य गृहं गतौ। तत्र जगदीशेन रमेशो दृष्टः। चतुर्वेदिना तयोरादरः सत्कृतः। ततो जगदीशन चतुर्वेदी पृष्टः—"रमेशः कतिकक्षापर्यन्तं शिक्षितोऽस्ति ?"

चतुर्वेदी—श्रीमन् ! अस्मिन्नेव वर्षेऽयं व्याकरणाचार्यपरीक्षां दत्तवान्।

जगदीशः अग्रे किं कर्तुमस्य विचारः श्रीमन् !

चतुर्वेदी— अग्रेऽयं प्राध्यापको भवितुं कामयते कस्मिन्नपि विश्वविद्यालये। प्रथमं तु ह्यत्रैव नियुक्तो भवेदिति स प्रयतते, विशषतश्च साफल्यमाशास्तेऽपि।

जगदीशः—कति भ्रातरः सन्ति किं च ते कुर्वन्ति ?

चतुर्वेदी—चत्वारो भ्रातरः सन्ति। केवलमेनं विहाय त्रयोऽपि विवाहिताः सन्ति। तेषु द्वौ तु वाणिज्यव्यवसायिनौ परमेकश्च परम्परागतपाण्डित्यवृत्तिजोवी, श्रीमन् !

ततो भवनादिकं सर्वं निरीक्ष्य तौ रामचन्द्रस्य गेहं जग्मतुः। सहैव चतुर्वेदोऽप्यासीत्। पुनरङ्गुल्या दुरतः सङ्केतयित्वा द्विवेदिना तीर्थेशभवनं दर्शितम्। आनन्दोऽपि कथञ्चित् तत्र दृष्टिगतः। जगदीशेन स काम इवाऽऽभासितः। "अयमेव कमलाया योग्यो वरः। पुनरस्य योगस्तु द्विवेदिगृहविघातकरः। अतोऽनेन सह तस्या विवाहस्य कः प्रश्नः ?" इति तेन विचारितं मनसि। चतुर्वेदी परस्परवार्तालापेन-'अयं कमलाया मातुलः। तामेव परिणाययितुं तत्सर्वं चर्चितमनेन। तस्या विवाहे सहमतिरस्य मान्या" इति सम्यक् विचार्य द्विवेदिनः सकाशाज्जगदीशस्य सङ्केतं टिप्पणीकृत्य तौ स्वर्गतकसदनं सम्प्रेष्य स्वस्थानमव्रजीत्। जगदीशश्च

तस्मिन्नेव दिने सायं पञ्चघण्टितकालस्य वाष्पयानेन 'गृहं गत्वा सम्यग्विचार्य पत्रं लेखिष्यामि, ततः सम्बन्धः क्रियताम्, सोऽपि शीघ्रम्" इतिभगिनीपतिर्भागिन्यौ प्रकथ्य स्वदेशं जगाम।

चतुर्वेदिनो मनसि चिन्तेयं व्याप्नोद् यत् "कमलाया विवाहो रमेशेन सह नाऽभूच्चेत्स्वप्राणान् सोऽवश्यमेव विहास्यति"। अतस्तस्य हृदये क्व शान्तिः? जनकेन स्वसन्तानः सर्वथा लब्धसुखो द्रष्टुमिष्यते। तेन तज्जीवनाय बलितया स्वजीवनमपि दातुं शक्यते। परं सर्वेषां प्रकृतिरेकविधा न। व्यतीतेषु द्वित्रेषु दिनेषु चतुर्वेदी कर्णपुरे स्वमित्रस्य समीपं प्राप, सर्वां च कथामश्रावयत्।

मित्रेण चतुर्वेदिनः सादरं सम्मानो विहितः। ततश्च समाश्वासनप्रदानपूर्वकमित्थं सोऽकथयत्- "मित्र चतुर्वेदिन्! भवताऽधुना रमेशविवाहचिन्ता न कार्या। सर्वं शुभमेव भविष्यति। जगदीशस्तु स्वकीयो जनः। सोऽस्मदीयं कथनमस्वीकर्तुं न शक्नोति। पितृस्वस्रीयं जनोत्तमं गृहीत्वा तत्राहं यास्यामि। जनोत्तमो जगदीशस्य परमं मित्रमस्ति। परमुत्कोचस्तस्मै दानीयो भविष्यति। कथ्यतां मित्रवर्येण यदुत्कोचदानं स्वीकृतं न वा?" चतुर्वेदिनापि तदोत्कोचदानाय हुङ्कृतम्।

चतुर्वेदिनः कर्णपुरीयमित्रस्य नामाऽस्ति चन्द्रशेखरः। उत्कोचग्रहणमस्य मुख्यव्यापारः। तस्य ग्रहणान्न कोऽपि बन्धुस्त्यज्यते न वा मित्रम्। तेन चतुर्वेदिनः सकाशादपि शतमुद्रा गृहीताः। सर्वास्तास्तदुदरं गताः। जनोत्तमस्य नाम तु तेन वृथैवोच्चरितम्। कस्यचिदपरस्य नाम्ना मिथ्याभाषणं

कृत्वा बन्धूनां समीपादुत्कोचरूपेण धनस्य ग्रहणं ततश्च तेषां त् स्वतः कार्यसम्पादनमिति तस्य नियमः। अतो निरन्तरं द्वित्राणि दिनानि जगदीशस्य निकेतनं गत्वा मित्रतया चातुर्येण च विवाहविषयकं तस्य विचारं ज्ञात्वा तेन चतुर्वेदः कथितः "जनोत्तमेन विज्ञापितं मित्रवर्याः ! यत्कमलाया विवाहः शूकरक्षेत्रे भविष्यति, साऽपि रमेशेन सह शीघ्रमेव। तदर्थं पत्रमपि जगदीशेन लिख्यते। यदि चाऽग्रे विचारः परिवर्तेत, तदधुना नैव वक्तुं शक्यते।" अतो निश्चिन्तेन भवता गम्यतां गृहमिति। तद्वचनं निशम्य प्रसन्नचित्तश्चतुर्वेदी ततः स्वनगरमाजगाम।

रमेशोऽधुनाऽस्ति पूर्णतया विश्वस्तो यदस्ति कमलाया उपयामस्तेन सह शीघ्रभावी ! कमलाया मातुलेन सार्धं तज्जनको लालापतिर्यदा विवाहाय तमवलोकयितुं गृहमागमत्, तस्य हृदये तदा यो हर्षः समुत्पन्नः, तं परिणयेच्छुस्तरुण एव जानाति। यदानी कमलां स आनन्देन सार्धं मितस्ततः परिभ्रमन्तीमुद्यानेषु प्रेमालापमाचरन्तीमवलोकयति, तदानीं तदन्तर्दग्ध्वा भस्मसाद् भवति। पाणिग्रहणानन्तरं स कदापि तस्यै बहिर्गन्तुं स्वीकृतिमपि न दास्यति, पुनरित्थमितस्ततस्तु परिभ्रमणं दूरमेव भविता। विवाहोऽस्यैवाऽऽचरणस्य, आनन्देन च समं प्रेमपाठपठनस्यैव दण्डः।

अतिक्रान्ते सप्ताहे केनचिदेकदा स्वस्तिकसदनस्य द्वारे स्थित्वा शब्दः कृतः—

"द्विवेदिनः !"

"कस्त्वम् ?"

"पत्रं गृह्यताम् !"

"अयमायामि।"

. . . . . . . . . . . . . .

इत्युक्त्वा स पत्रवाहकसमीपमागतः ।

"द्रुतगामि पत्रम्, अतो हस्ताक्षराणि क्रियन्ताम् ।"

"कुत्र ?"

"अत्र श्रीमन् !" (पत्रवाहकोऽङ्गुल्या संकेतयति) ।

हस्ताक्षरानन्तरमावरणपत्रमनावृत्य द्विवदी शीघ्रमेव पत्रं पपाठ—

कर्णपुरतः

दिनाङ्कः – १४-३-१९६१

पूज्य भगिनीपते !

सादरः प्रणामः ।

सर्वमत्र कुशलम् । तत्र भवन्तोऽपि परमपितुः परमात्मनो महामातुश्च गङ्गाया अनुकम्पया सपरिवाराः सानुबन्धा भविष्यन्ति नूनम् । अनन्तरं सेवायां सप्रश्रयं निवेद्यते यच्चिरंजीविन्याः कमलायाः विवाहसम्बन्धः श्रीगङ्गासहाय चतुर्वेदिनः पुत्रेण चिरञ्जीविना रमेशेन सह चैत्रीपूर्णिमायां सोमवासरे तदनुसारं ३१-३-१९६१ तमे दिनांके पारिवारिक सर्वसम्मत्या सह सुनिश्चितः । आशासे, ससमयमेनं विवाहसम्बन्ध स्वीकरिष्यन्ति श्रीमन्तः खलु ।

विवाहविषये समुचितोऽयं मे लेखनकाल इति सम्यग्विचार्य मया पत्रमिदं प्रहितं, येन सुप्रबन्धो भवेत् । विषयोऽयं रमेशस्य पितरं कमलायाश्च मातरं विहाय कस्यापि कर्णगोचरो न कर्तव्यः, कमलायै च यथाकालं सूचनीयः । चतुर्वेदिनः समीपे पृथगेव पत्रं प्रेष्यते मया, किं बहुना ? भगिनीपादयो मे प्रणामो वाच्यः, भागिनेयीं च प्रति स्नेहमयः शुभाशीर्वादः । पत्रोत्तरं कामयतेऽयं जनः ।

भावत्कः—
जगदीशः।

त्रिवेदिभवनम्,
नवीनकुञ्जम्,
कर्णपुरम् – २।

पत्रस्य सर्वं वृत्तं कमलाया मातरं तस्या अनुपस्थितौ स श्रावितवान्। पश्चापि—"कमलाऽधुना शीघ्रमेव पतिगृहं प्रेषणीया, कदाचिदानन्दसङ्गत्या सा स्खलितं न कुर्यात्, इति मनसि विचार्य हुङ्कृत्या तदा स्वीकृतिं दत्तवती।

(२०)

"आनन्द ! अद्य तु मे जन्मदिवसः।"
"पुनरयं हर्षस्य समयः, कमले !
"भवता किमपि भोजनीयम्।"
"मिष्टान्नमानीतवानस्मि।"
"मिष्टान्नम् ?"
"आम् !"
"पातुञ्च !"
"गङ्गाजलम्।"
"ऊं— — —ऊं ! नैतत्, नैतत् !"
"तत्किम् ?"
"प्रणयपूर्णं स्वकीयं मधुरगीतम्।"
"त्वया श्राव्यं भवेत् कमले !"
"मया !"
"आम् !"
"नहि, नहि, आनन्द !"
"तर्हि।"
"शुश्रूषे त्वन्मुखात्।"
"मदीयमुखात्।"

"आम् !"
"किं शुश्रूषसे कमले !"
"त्वदीयं नव्यगीतम् ।"
"मदीयम् ।"
"आम्, आनन्द !"
"कतमम ?"
"तदेव ।"
"तदेव किम् ?"
"प्रे — — — — ।"
"प्रे··· ··· ···, श्रुतं त्वया ।"
"नहि ।"
प्रे"··· ··· तु मया गीतं, परं त्वया कथं न श्रुतम् ?"
"प्रेवर्णंप्रारभ्य गीतं श्राव्यतां, तदेव ।"
"किमस्ति तद गीतं यच्छुश्रूषसे ।"
"तदेव, यत्पूर्वं गीतं विद्यालये ।"
"नैव स्मृतं, स्पष्टं कथय ।"
"प्रेमाणं ··· ···, तदेव ।"
"पूर्णपंक्तिमेकां कथय गातस्य, येन स्मृति र्भवेत् ।"
"यद् गीतं कथमद्य न स्मर्यते, यस्मिन् पारस्परिकप्रेमकामना प्रदर्शिता त्वया ।"
"नैव स्मरामि ।"
"तदेव स्मर—'प्रेमाणं त्वदीयमिच्छामि ।"
"आमेवं स्मरामि कमले !"
"श्रावय तदानन्द !"
"श्रावयिष्यामि, किन्तु··· ··· ··· ।"
"किन्तु किम् ?"
"एकोऽस्ति पणः ।"

"कथ्यतां, तत्कः ?"

"त्वयापि मया समं गेयमपि, तदिव ... ... — ।"

"मया !"

"आम !"

"एवमस्तु "

"तदहं पाणिवादकः स्यां त्वञ्च नृत्येः, सहैव गायेव ।"

"तदद्य सङ्गीतं भवेद् आनन्द ? यन्न भूतं, न भावि । संगायन्तावावां स्वस्य कमलामन्दनाम्नो वास्तविकीं सार्थकतां प्राप्तुं शक्नुयाव ।"

"अस्तु, गायतां कमले !"

'प्रेमाणं त्वदीयमिच्छामि' इति पारस्परिकप्रेमप्रधानं मधुरगीतं गायन्तौ तौ शिलातलञ्चैकमलङ्कुर्वन्तौ 'प्रिये !' 'प्रियतम !' इति परस्परं च प्रेम्णा सम्बोधयन्तौ स्वप्रणयमय्यामानन्दनिद्रायां निमग्नावभूताम् ।

सूर्योऽस्ताचलान्नीचैरवततार । धूमिले नभसि पक्षिणः क्वचिदाचरन्तः प्रडीनं, क्वचिच्च कुर्वन्तः सडीनं, नीचैर्नीचैरुड्डीयमाना नीडान् गच्छन्तोऽचोचहन् । कमलान्युद्याने मलिनमुखान्यभवन् । व्याप्नोद्धि कृष्णिमाऽऽकाशम् । कमला वनेषु केलिं प्राप्य गता निवासम् । परमेतावत्कालं कमलानन्दयोः रमणनिद्रा न भग्ना । तावद्य तत्परमं सुखं प्राप्नुतां, यदिह जीवने न कदापि लब्धुं प्रभविष्यतः । इदमेव तयोरन्तिमं दिनं प्रणयस्य, तदपि तमिस्रया व्याप्तम् । शर्वरी स्वतिमिरातिशयं ग्रहणन्ती शनैः शनैरैधिष्ट । रात्रिचरा यथेष्टं पर्यटन्तो दिनाभावमकामयन्त । शिवारुतैरकस्माद् रात्रौ नवघण्टितकालमनुमाय तौ स्वरमणकेलिं परित्यज्य 'कथमावामन्योऽन्यं विना लोकेऽस्मिन्नुषितुं शक्ष्यावो यद्यन्यथा

परिणीतौ भविष्यावः, इति मनसा विचिन्तयन्तौ 'बहुरात्रि गंता' इति विचार्य स्वं स्वं गृहं गच्छन्तौ मार्गे पुनरालपितु-मारभेताम्।

"क्रीडेयं कियत्कालं भविता, आनन्द ! यश्चावयोः प्रणयः, तस्य साफल्यं स्वपरिणयेन किमस्मिञ्जीवने नाऽवलोकयिष्यावः ?"

"कथन्न, कमले ! स्वप्रेमसफलतामावामत्रैव लोकिष्यावहे, परमेतदन्तरं सुभगे ! यदिमां भूमिमपरित्यज्य नावयोः परिणयोऽत्र भावी !"

"तत्कथं जीवनं नेष्यावः ?"
'इयमेव विषमस्थितिः।"
"तत्पुनः किं भवेत् ?"
"यदि स्वीकुर्याश्चेत्, तत्किञ्चिद् वदेयम्।"
"कथयस्व, आनन्द ! त्वदीयं वचः कदा नाऽङ्गीकृतं मया?
"तदितः पलायनमेव श्रेयस्करं कमले !"
किं पलायनम् ?
"आम् !"
"यादृशस्त्वदीयोऽभिलाषः ?"
"तदेहि, गृहं न गमिष्यावः।"
"किमिदानीमेव पलायनम् ?"
"अथ किम् ? समुचितोऽयं समयः।"
"नह्यद्य नहि, श्वश्चलिष्याव आनन्द !"
"अवश्यं चलिष्यसि कमले !"
"अवश्यम् !"
"तद् वरम्।"

"गच्छ, स्मरणीयं श्वः -···- ।"
"किं पलायनम् ?"
"आम् !"
"क्व मेलिष्यसि कमले !"
"अत्रैव लतामण्डपे — — ।"
"अवश्यमागन्तव्यं त्वया ।"
"अवश्यमेव ।"
"नमस्ते प्रिये !"
"प्रियतम ! – — –— नमस्ते ।"

इति निश्चित्य कमला गृहं प्राप । तदानीं घटिकया दश वादिताः । भर्त्सनभीत्या तया शनैः शनैः कपाटे अनावृत्य 'कस्कोऽत्रभोः!' इति तारस्वरितवचनमाकर्ण्यापि नैव किञ्चिदुक्त्वा स्वकक्षे मन्दगत्या पदे अर्पिते, विद्युद्दीपं च तत्र प्रज्वाल्य चतुष्पादिकायामुपविश्य पुस्तकं हस्ते कृत्वा यदा किञ्चित्पठितुमुपक्रमितं, तदा किञ्चिच्छ्रुतं पितुर्वचनमित्थम्—

"किमपि दृष्टं न वा ? भावत्की पुत्री परिभ्रम्याद्य जन्मदिवसेऽप्यधुना गृहमागता ! यावदस्या विवाहो न भविष्यति तावदियं किं मंस्यते ? वर्धापनसमये तूपस्थितिरस्या अनिवार्याऽऽसीत् । किन्तु——–, बहुवारं निशेधिताया अप्यस्याः स्थितिरियम् । अथ श्वः प्रातरारभ्य कदापि नेयं बहिर्गच्छेत्, अन्यथा तु——–, दुष्परिणामो भविष्यति ।"

ततः पश्चादागत्य कमलाया माता पद्मा– "पुत्रि ! किमद्य भोजनं न करिष्यसि ? भ्रमणेनैव किन्ते परिपूर्णमुदरम् ? समाजं नावलोकयसि ? न जाने, किं कथयन्ति जनाः, चल, किमपि तु भुङ्क्ष्व । बुभुक्षा त्वामद्य न बाधते किम् ?

अद्यतो यद्येतावत्कालं बहिर्गमिष्यसि, तत्ते पादयोः प्रहरिष्यामि।" इति सप्रेम क्रोधं प्रकटयन्ती तस्या हस्तं संगृह्योपरि महानसं गता।

    

( २१ )

आनन्दो गृहमागत्य मातरं भोजनाय तमेव प्रतीक्षमाणामवेक्ष्य स्मयमानः सप्रश्रयं विनम्रतयाऽकथयत्—"मातः! अद्य विलम्बोऽभवत्। श्रीरामचन्द्रजनन्यैतावत्कालमुपवेशितोऽहम्। त्वं तु जानास्येव, क्वाहमन्यत्र गच्छामीति।"

"अस्तु, भोजनं कुरु, बुभुक्षितो भविष्यसि" इतीरयन्ती तत्समक्षं भोजनस्थालिकामस्थापयल्लक्ष्मीः। सोऽपि वसनान्यपहाय केवलेनाऽधोवस्त्रेण सह भोक्तुमारभत मातरमालपन्नेव। भोजयित्वा तं सा शयनार्थमादिश्य द्वारारयो विष्कम्भं दत्वा शयनाय शिरोगृहमयासीत्। तत्रैव फुल्लसहायः पर्यङ्के शयानो नभसि ताराः प्रति दृष्टिं ददानो ग्रीष्मसुखमनुभवति स्म। आनन्दश्च दुग्धं निपीय स्वाऽध्ययनकक्षक्षोमे शय्यायां पतितः सन् क्षणं विरम्य सुप्तः।

व्यतीतेऽल्पे काले लक्ष्म्या शब्दोऽकारि—"आनन्द रे! आनन्द! किं पठसि शयितो वा" यदा नाऽस्योत्तरं प्राप्तं तदित्थं तया मिश्रः कथितः—"किं पुत्र न परिणाययिष्यति भवान्?"

"किं कथयानि त्वामानन्दमातः! यदि कमलायाः संयोगो भवत्पुत्रेण सह कल्पितो विधात्रा, तर्हि तत्र न कस्यचिदवरोधो भविष्यति। तया च सार्धमानन्दस्य विवाहोऽवश्यमेव भविष्यति। नो चेत्, तत्किमहं कुर्याम्?"

"विवाहाय सर्वविधा वार्ताः प्रयत्नाश्च करणीया भवन्ति। आनन्दपितः ! भवादृशस्य निरन्तरं पल्यङ्के शयितस्य पितुः पुत्रस्य विवाहः कोऽपि सहजो नास्ति।"

"तन्मे विवाहः कथं भूतः? किमहं तव पितुर्गृहं कथयितुं गतो यल्लक्ष्म्या सह मदीयो विवाहः कार्यः। किं वा मे पिता तत्राऽगच्छत् ?"

"इदानीन्तनस्य तदानीन्तनस्य च समयस्य कार्यविधौ महदन्तरम्। तदानीन्तु रूप्यकेन षोडशसेरमिता गोधूमा क्रीयन्ते स्म, सम्प्रति चैकसेरमिता एव। कथ्यतां कियदन्तरम् ?

"भो भो मे महाराज्ञि ! यत्नस्तु मया कृतः, परं तत्र सिद्धि र्न लब्धा। अत्र मम को दोषः ?"

'सर्वमिद प्रलपितं मिश्रमहोदय ! भवतः। यदि भवान् प्रायतिष्यत, तत्पुत्रस्य वाग्दानमपि नाऽभविष्यत् ? श्रूयते – गङ्गासहायेन प्रयतितं, तद् रमेशस्य परिणयः कमलया सह निश्चितो जातः। भवता तु हस्ताहस्ति कृतमीदृश, यद् वार्तालापोऽपि गतप्रायः। या मे वधूर्भवितुमायाति स्म, साऽधुना परकीया भविष्यति। हन्त मे भाग्यम् !

"भाग्यं मा क्रोशो लक्ष्मि! समाचारोऽयं कथं ज्ञातः ?"

"पञ्चषाणि दिनानि व्यतीतानि। कमलायाः मातुलीयं पत्रं समागतम्, तत्र तेन तस्या मातुलेन रमेशेन सह विवाहं विधातुं विनिश्चितम्' इति सर्वं विमलाजनन्या श्रावितम्। सा चन्यगादीत्--'विमलाया योग्यो वरो न कुत्रापि मिलितः, इतस्ततस्तज्जनकेन बहु भ्रमितम्। अथ स विमलाजनकः

  

श्वो मयराष्ट्रं गन्ता, तत्र केनापि कश्चिद् विमलायोग्यो वरो विज्ञापितः।"

"अस्तीदृशं लक्ष्मि !"

"अथाऽहं भवन्तं निवेदयामि यत् स्वपुत्रस्य विवाहं विमलयैव सह करोतु। अन्यथा सापि हस्तान्निर्यास्यति। यतो हि--विगतः समयो न पुनरायाति मिश्रमहाभागाः।"

"नास्ति सा कुलीनगृहस्य बालिका। अतो मया पूर्वं तया सह विवाहो न स्वीकृतः। गृहं तु नावलोकयसि, व्यर्थमेवालपसि।" इति वदतो मिश्रमहोदयस्य वाण्यां क्रोध आसीत्।

"तद्गृहे का न्यूनता ? कथ्यतां, मयापि सा श्रोतव्या।" इति नम्रताऽऽसील्लक्ष्मीगिरायाम्।

"पुरा तस्याः प्रमातामहेन स्वगृहे वैश्या निक्षिप्ताऽऽसीत्" इत्यभूत् तारस्वरो मिश्रस्य।

"किमियद्दूरस्य सम्बन्धो गण्यताम्।" इत्याश्चर्यमासी त्तस्या वाचि।

"तदैव तु गृहशुद्धि र्भवति।" इत्यासीन्निवेदितमिव तस्य कथितम्।

"स्त्री रत्नं मन्यते मिश्रमहोदय ! तत्कथं शुद्धमशुद्धं वा ?"

"नहि रत्नानि सर्वाणि शुभानि भवन्ति लक्ष्मि ! किमपि किमपि तेष्वशुभमपि रत्नं प्रजायते, तथैव मे शुद्धवंशं कलङ्कयितुं तां मन्यस्व।"

"यथा तुभ्यं रोचेत, तथा कुर्वीथाः। ममोक्तं तु किञ्चन न मन्यसे, पुनरद्य किम् ?" इति कञ्चन रोषं प्रदर्शयन्त्या लक्ष्म्या कथितम्।

"कथं दुःखादङ्गानि गृह्णासि मे महाराज्ञि ! अतः शान्ति धारय। यथा समयं विवाहोऽपि भावी। प्रथमं तु ते पुत्रः कमलां प्रणयते, विमलां तु नो।" इति मिश्रस्तां स्वभार्यां मानयन्नवादीत्।

"अत एवाऽहं कथयामि भो ! यद् आनन्दे प्रथमं कयाचिदन्यया सह परिणीते सा पुनरिमं न प्रणयेत। ततः स्वयमेवाऽग्रमन्यमनस्कोऽपि भवेत्। अन्यथा पुत्रोऽपि हस्ता-न्निर्गतः प्रायः। तदानीं परिणयश्चेदभविष्यत्, तत्साम्प्रतं मे स्वाङ्कः पौत्रहीनो नाऽभविष्यत्। हा हतभागिनीं माम्।" इति निगद्य सा तूष्णीमभवत्।

'किमधुना कुर्याम् ? 'कमलामन्तरेण न काञ्चिदन्यां परिणेतुं स कामयते' इति तन्मित्रेण रामचन्द्रेण तस्मिन् दिने स्पष्टं निगदितम्। यद्यहं तत्समक्षं विमलया सह विवाह-प्रस्तावं स्थापयामि, तत्स रमेश इव तमस्वीकृत्य मां न तिर-स्कुर्यात् ! रुचिं विना यदि परिणयो विधीयते, तत्पुनस्तेन सा कथञ्चित्परित्यक्ता न भवेत्। एवंविधा न जाने कियत्यो घटनाः सम्भूता मे समक्षम्। परं त्वया तु लक्ष्मि ! परिस्थिति-र्नावबुध्यते। साम्प्रतमस्मिन् सहशिक्षायुगे तरुणीतरुणयो-र्विवाहस्तयोः रुचिं पृथङ्नेव विधेयः। अन्यथा दुष्परिणामो भुज्यते।" इति कथयन्, मनसि किमपि चिन्तयन् कृष्णाकाशे देदीप्यमानं तारागणमवलोकयन्, शीतलमन्दगतिपवनेन शरीरस्पर्शसुखमनुभवन्, परं पुत्रस्य विवाहचिन्तया मनस्य-न्तर्दहन् निद्राव्याजेन तन्द्रया वशीभूतो मिश्रो रात्रिमनैषीत्।

( २२ )

प्रातरभूत् । आनन्दो जागरितः । विहगानां मधुरकलरवेण साकं तन्मानसमद्य हर्षाल्लहरायते स्म । सोऽद्य सायं पञ्चघण्टितकाले स्वप्रेमिकया सह तं देशं यास्यति, यत्र न कोऽपि भवेत् तत्प्रेमावरोधकः । प्रेमैवास्ति संसारेऽस्मिन् मुख्यवस्तु, यत्प्राप्तिमन्तरेण जीवनमत्र व्यर्थम् । तदवलोक्य लोकोऽयमन्तर्दहति । सुन्दरं हि सर्वैरिष्यते । यद् यस्मै रोचते तदेव तदभीष्टम् । स्वभिन्नापरवृद्धिं विलोक्य समाजोऽयमन्यस्मै ईर्ष्यति । यद् यस्य वस्तु, नास्ति तदपरस्य, परमन्येन तदात्मसात्कर्तुं कथमित्थं दुष्प्रयत्यते ? येन द्वयोरपि हस्तान्निस्सरेत् तत् ? अहो ! विचित्रयं गतिः ।

हस्तमुखं प्रक्षाल्य, प्रातराशं विधाय, मनसा किमपि विचार्य, पर्यङ्के पतितः सन्, घटिकायामेकादश वादितानवलोक्य, शीघ्रमुत्थाय, स्नानादिना निवृत्तीभूय, भोजनं कृत्वा चतुष्पादिकायामुपविश्य, स्वकक्षे पुस्तकानां पृष्ठपरिवृत्या समयं प्रक्षिपन् निश्चितकाल स प्रतीक्षितुमारभत । ततो घटिकया सायन्तनाश्चत्वारो वादिताः । स च प्रतीक्षास्थलमार्गमग्रहीत् । पिता तस्य तदा गृहे नाऽऽसीत् । "क्व गच्छसि पुत्र !" इति मातुर्वचनमाकर्णितं न तेन । गत्यां तस्याऽभूदश्ववेगः । मार्गे रिक्ता घटा दृष्टिं गताः । तेन तन्मानसं चिन्तितमपि । "न जाने किं सर्वदैव मामकीने पथि बाधा समापतति ? पश्यामि तत्सर्वं समक्षमेव भविष्यति । यदद्य सा गन्तुमुद्यता भवेद् बहिर्मया सह, तत्को मत्सकाशादद्य तां परिग्रहीतुमर्हति ? जीवनं संघर्षमयम् । मृत्योः पश्चान्नैव किमपि ?" इति विचारयन् स दत्तसंकेत प्रतीक्षास्थलं प्राप्नोत् ।

सन्ध्यापर्यन्तं तेन प्रतीक्षितं, परं किञ्चिन्न फलमासादितम् । सूर्योऽप्यस्तं गतः । यथारुचि सञ्चरणमभूत्खगानामाकाशे । स्वमागमनं सूचितं प्रदोषेण । ततो वसुवर्षदेशीयः कश्चिद् बालस्तीव्रगत्याऽऽगच्छन् सहसा दृष्टिं गतः । यदा स समीपमागतः, आनन्दस्तदा तं प्रसन्नमनसोवाद—"हरे ! किमानीतवानसि ?" हस्तमग्रे प्रसारयता 'गृह्यतामेतत्पत्रम्' इति कथयता बालेन तस्मै प्रदत्तमेकमावरणपत्रम् । आनन्देन शीघ्रं तदनावृत्य दृष्टम् । तस्मिन् कमलाया एतत्पत्रमासीत् ।

प्रिय आनन्द !

मया वचनं प्रदत्तम् । परं समये तत्रोपस्थातुमहं कथञ्चिदपि समर्था नाऽभूवम् । कारणमस्य ह्यो विगतबहुरात्रितया ममाऽद्य मार्गेऽस्ति पित्रोरवरोधः । भवदीयसकाशाद् गृहमागतया मया परुषवाचा निगदन्त्या मातुरसह्यभर्त्सना श्रुता । तदुल्लेखेन किम् ? त्वत्तो मे न किमपि गुप्तम् । सङ्केतेनैव ज्ञायतां तत्सर्वम् । यद्यपि मयाद्य भवत्समीपमागन्तुमतीव प्रयतितं, किन्तु—"क्व गच्छसि ? गृहेऽत्रतिष्ठस्व, त्वमद्यतो गृहाद् बहिर्गन्तुं न योग्यासि" इतिवचनैः प्रताडिताहं मातापित्रो र्निरीक्षणैरन्तर्येण गृहान्निर्गन्तुमपि नाऽलंभूता । न जाने, स्वान्ते तयोरापतितं किमेतत् ? येन भवतामद्य विरहेण खिद्यते मे चेतः ।

परं मे प्रियतम ! सर्वथा तवाऽस्म्यहम्, न च मम शरीरमपि कस्यचिदपरस्य, समयं तावत् प्रतीक्षस्व । द्वित्रै र्दिनैः पित्रोः प्रसादतया गृहादवश्यमहं निर्गच्छेयम्, तदैवाऽऽवयोः सेत्स्यन्ति मनोरथाः । साम्प्रतिकवियोगेन भवता नैव विह्वलेन भवितव्यम् । किमधिकम् ? सहैव सन्निहितकमलोपरि कृपापत्रं प्रतीक्षे ।

स्वगृहकक्षतः ।  भवदीया —
२१-३-१९६१  कमला ।

एतत्पत्रं पठित्वा हृदयेऽत्यन्तं दुःखीभवता — "हरे ! नेष्यसि किं मामकीनमपि पत्रमेकम् ?" "कथन्न ? कमला-भगिन्या इदमेव कथितम्, मह्यञ्चैकाणकमपि प्रदत्तम्," "तल्लिखामि, तुभ्यं च पञ्चपणकान् प्रदास्ये" इति बालेन साकं वार्तालापमाचरता तेनैकं पत्रं व्यलेखि ।

प्रिये कमले !

प्राप्तं त्वदीयं पत्रम्, किन्तु विपरीतवृत्तं पठित्वा हृदयेऽतीव दुःखम् । प्रणयोऽयं किमावयोः सफलो न भविष्यतीति शङ्कते मे हृदयम् । सर्वमहं त्वयि विहास्यामीति मम खलु निश्चितम् । इतः पलायनेन विना नाऽऽवयो मंनोरथसिद्धिः । अतः समुचितं समयं दृष्ट्वा शीघ्रतामवलम्ब्य प्रतीक्षास्थल-मधिश्रयेः । अत्रैवाहं मेलिष्यामि समयेऽस्मिन् प्रतिदिनम् । जीवनं मे तवाधीनम् । सर्वं तु जानासि, किं बहुना ? शीघ्रतामवलम्बस्व । न जाने, किमग्रे भवेत् ?

प्रतीक्षास्थलतः ।  प्रतीक्षमाणस्त्वदीयः—
२१-३-१९६१  आनन्दः ।

पत्रं तस्मिन्नेवाऽऽवरणपत्रे निधाय, स्यूतात् किञ्चि-न्निस्सार्य, पञ्चनवीनपणकान् च हस्ते निक्षिप्य स हरिमग-मयत् । स्वयं च—"ह्यो यदि रात्रि नाभविष्यत्, तर्ह्यद्य कमलाया आगमने नाभविष्यत्कोऽप्यवरोधः । रात्रौ विलम्बेन तत्पितरावित्थन्तु नाजानीतां, यदियं कमला निषेधितापि भ्रमणमिषेण आनन्दसमीपं प्रयाति प्रत्यहः सायम् । अतस्त-त्सम्मेलन न भवेत् । पित्रोरवरोधतया न जाने किमग्रे

भावि ? इति विचारयन् स खिन्नमनाः शनैः शनैर्मन्दगत्यां गृहमायातः।

हरिः कमलायाः प्रतिवेशो, सम्बन्धेन तु स पितृव्यपुत्रः, द्वयोर्मध्ये बाल्यसुलभलोभेन गृहीतपणको यथासमयं पत्रवाहको भवति। द्वित्रैर्दिनैर्यदा प्रेमिणोः साक्षात्कारो न भूतः, तदा पत्रेणैव तयोः वार्तालापो भवितुमारभत। पत्राण्यतोवहृदयविदारकान्यासन्, यैस्तयो र्मनसी बहुव्याकुले भूते। परं किं भवति ! समाजबन्ध एव प्रबलः।

"कन्याया अपकीर्तिःत प्रस्तरोट्टङ्किता पंक्तिरिव भवति तद्भिन्नस्य च सल्लकीपंक्तिरिव। अतो दुर्नामापेक्षया दुष्कृतमेव वरम्।" इत्थं कमलानन्दशब्दस्य सार्वत्रिकचर्चया लालापते हृदयमेतावद् विदीर्णमभवत्, यत्तेन स्वपुत्र्या अवरुद्धं गृहान्निर्गमनमपि। प्रेमिणो र्जीवन-मेलनं तु समाजो नाभिलषति, तस्येयं मूलप्रकृतिः, यया स तयो र्वियोगेन परिपीडिते हृदये विलोकयितुं कामयते। तस्य स्वान्ते तु शान्तिस्तदैवाऽऽयाति, यदा तयोर्विरहो भवति। येन द्वयोरश्रुधारासेकेन परिपुष्टं भवति तन्मनः स्थलम्। यद्यपि कमलया गेहान्निर्गन्तुमपि प्रयतितं बहु, परं तत्सर्वं व्यर्थमेवाऽभवत्। पुनरन्ते तयैतत्पत्रं व्यलिख्यत —

प्रिय आनन्द !

किं लिखेयम् ? नैव किमपि लिखितुं शक्यते मया ? किन्तु......, पारिवारिकस्थितिमनुभूय सम्प्रति किञ्चिल्लिखामि, तदन्तिममेव। अहमस्मि तावकीना, त्वमसि मामकीनः। अस्मान्नावयोः कश्चिद् भेदः। परमिदं पाञ्चभौतिकमावयो र्मेलनमीश्वरोऽप्यतो न स्वीकुरुते, यत्त्वमसि

महापुरुषः। किन्तुः ‑ ‑, क्व मे तद् भाग्यम्? यत् ते चरणरजसा मदीयानलकानलङ्कारयितुं मां समर्थां कुर्वीत।

मदीय प्रियतम!

पूर्वमेव मया कथितमासीद् यन्मयि नाधिकं स्वकीयं प्रेमपथं विस्तारय, परन्तु नामन्यत त्वया तत्। अहं चापि त्वदीयसकाशात् स्वात्मानं पृथक्कर्तुमलं नाभूवम्। तस्याऽयमेव परिणामोऽभूद् यदावामन्योऽन्यात्सर्वथा वियोगं लभमानावस्मात्सांसारिकविग्रहात्पृथग्भूतौ, परं हृदयं त्वकमेव। यद्यावयो र्जीवनमेलनमत्र नाभूत् तर्हि तत्राऽवश्यमेव स्यादित्याशासे। किमधिकेन? श्वः शरीरमिदं कश्चिदन्यः परिणयेत्, परं न माम्। परिणीताऽहन्तु त्वया तदा, यदा गङ्गोपवने मे करं गृहीत्वा ‑‑ परन्तु... ‑‑, शरीरमवशिष्टं समाजदृष्ट्या, तस्याऽयं कालः। स्वीयं विवाहं कृत्वा सुखमयं जीवनं यापनीयं हि भवता, विस्मरणीया च सर्वथाऽहमिति स्वीक्रियतां मम प्रार्थना देव!

स्वगृहकक्षतः। अभागिनी—
३०-३-१९६१ कमला।

पत्रं यदाऽऽवरणपत्रे निहितं, तदा नेत्राभ्यां बिन्दुद्वयं निपतितं, येन तत्र चिटिकामुद्रयोः कार्ये सम्पादिते। पुनः पत्रं हरिहस्ते समर्प्य, शयनीये स्वात्मानं च निपात्योपधानमाश्रित्याऽधोमुखी कमला भृशं रुरोद। अद्य तस्या हृदये प्रियविरहशोकसागरः स्वसीमानं परित्यक्तुमुत्तुङ्गायते, योऽग्रे प्रलयङ्करो भवेत्। तया यन्मनसि कृतं, तत्सैव जानाति। नास्ति युक्तः सम्प्रति तदुल्लेखः।

पठितमानन्देन पत्रम् । आशातीतवैपरीत्यं पत्रेण विज्ञाय स्वकृत्यमविस्मरता तेन घण्टैकपर्यन्तमरोदि, पुनश्च विचिन्त्य पत्रमित्थमलेखि –

प्रिये कमले !

अधिगतं पत्रम् । इतिहरूढिहस्ते मानवता समर्पितेति खिन्नं मे चित्तमधिकम् । यन्न कदापि स्वप्नायितं, तदधुना किं कृतं सुभगे ! यत्त्वया विहितं परमेशेन वा कारितं, तदेवं वरं, नातिलेखेन मे प्रयोजनं किञ्चित् । प्रियतमे ! त्वत्तः साम्प्रतमहं शरीरेण पृथग्भूत्वा, सांसारिकसम्बन्धान् समाप्य, तव वियोगप्रचण्डानले सावयवं स्वात्मानं तापयित्वा, तव मधुराकृतिमविस्मरन् सर्वाधिककष्टं सहित्वा, भाररूपेण जीवनं यापयिष्यामि । यतोहि—"नाऽयं तादृशः........, यः पाणिं......गृहीत्वा... त्यजेत्" इति मे कथितपूर्वम् ।

कमले ! मामधुना सर्वथा विस्मर, पत्या च सह जीवनं सुखयन्ती, स्वात्मान च न कथञ्चिद् दुःखयन्ती व्यवहर । यदि त्वमसि सत्यान्वेषिणी, तर्हि मे वचनं त्वया नूनमेवाऽव ध्येयम्, अन्यथा विस्मरणीयं सर्वं सदा । मञ्जूषायां ते या मे 'किशोरगीतम्' इति नामिका संस्कृतनव्यगीतलिपि विद्यते सा सहैव नेया, यामवेक्ष्य यदा कदाऽहं स्मरणीयस्त्वया । यद्यत्रापि रुचि नं भवेत्, तन्मे गृहं सा प्रेष्या त्याज्या वा यत्र तत्र । नाऽधिकं लेखितुं क्षमे । अन्ते च यदि त्वं सत्यपथमनुसरसि तदीशस्ते शक्ति दद्यात् । अस्तु, सर्वथा गतः

दैवहत आनन्दः ।

प्रतीक्षास्थलतः सायं सूर्यास्ते,

३०-३-१९६१

इति पत्रं हरिहस्ते समर्प्य, स्यूताच्च निस्सार्य सर्वानपि

पणान् तस्मै प्रदाय, कपोलागतान् नयनाश्रुकणान् करपटेन प्रोञ्छयन्, हृदये प्रस्तरं निधाय, शनैः शनै र्विषमभूमौ पादौ निपातयन्, "जीवनं मे व्यर्थं विनात्र कमलाम्" इति मनसि कुर्वन्, हरिद्वाराय स बरेलोअण्टापथमाशिश्राय। शर्वर्यग्राऽऽकाशमधिगतं बभूव, चन्द्रमसो मलिनं मुखमासीत्, तत्र हि मेघाच्छन्नतया चन्द्रिकाया अभावः। सर्वतो वारिदेषु तिरोहिता सा, यस्मान्मार्गेऽपि प्रकाशावरोधः। किन्तु विचारास्तच्चेतसि स्वबलमेतावन्न्यपातयन्, यत्तस्य हृदयं विदीर्णमभवत्।

"समाजोऽपि किम् ? यस्मिन्नियज्ज्ञानमपि न, यत् प्रेम वितीर्यते तु न, स्वतो जायते। कस्यचिज्जनस्य हृदयाधिकारो नैव सरलः, अपितु कठिनः, न कोऽप्युपहासः।"

"इत्थंविधेन विवाहसम्बन्धेन किं भवति प्रेमैकस्यां जायते, न तु चतसृषु। नाहं विवाहं करिष्ये कमले ! त्वामन्तरेण।"

"समाजोऽयमावयो मार्गेऽवरोधकोऽभूत्। न तवेत्थमाचरणं वरं रे ! ईर्ष्यालो !"

"कथं सा मामन्तरेण जीविष्यति ? मदीया स्मृतिस्तस्या हृदयं किं दुःखयिष्यति न ?"

"यदाऽहं तत्पाणिमग्रहीषं, तस्या आकृतिस्तदा का ? कियती मनोहरा ? लावण्यवती सुकोमला। अद्यापि सा तादृशी, नास्ति किमप्यन्तरम् ! हा मां हतभागिनम् !"

"अधिकं विह्वला सती सा स्वात्मानं तु न हन्यात्। नासावशिक्षिता। आत्महत्या तु महापापम्। किमित्थं करिष्यति सा ? नैव, नैव।"

"प्रथममहं तद्गृहं गतः, तत्तयोद्याने कृतं पाणिग्रहणं प्रति सङ्केतितम्। परमधुना रे समाज! त्वं नीचोऽसि। ईर्ष्यालो! प्रेमिणोरन्तर्दाहं सोढुं शक्तोऽसि किम्?"

"किन्तु— —, विह्वलाधिकं सा भविष्यति मां विना, रोदिष्यति च हृदयेन, स्मरिष्यति च माम्। किमधुनापि शान्तिर्न ते मनसि रे नीच!"

"कमले! कमले! त्वं मदीयासि, मदीयासि कमले! त्वामर्चिष्यामि निरन्तरं हृदि। मत्तस्त्वां न कोऽपि हर्तुमर्हति हर्तुमर्हति किं भोः! कथय, कथय, प्रिये! प्रियतमे! मदीये कमले!"

"किं नैव स्मरसि प्रिये! तच्चित्रम्? घटनाप्रकरणं वा? यदा त्वया गङ्गोपवने शकुन्तलाया मया च दुष्यन्तस्य स्वरूपं गृहीतं, यदा तव पाणिं गृहीत्वा मया त्वं शिलातलमानीता। किं स्मृतं न वा ते? त्वयाहं तदा पतिरङ्गीकृतः। सम्प्रति केन पत्या सह यास्यसि? किं तेनैव रमेशेन सह! यस्मिन् त्वमधुना घृणां कुरुषे। किं स ते पतिः? अहं न, कथय, प्रिये! कथय।"

"कथं न वदसि? किमसि रुष्टासि? तदहं निवत्स्यामि नैव नगरेऽस्मिन् ते। किमहमितो गच्छानि? वद वद। यदा तव विवाहो मया पृथगन्येन सह भवति, तदाऽहं तवेद नगरं परित्यज्य गच्छामि। शृणोसि प्रिये! किं नैव शृणोषि? मामालपसि कथं न कमले! त्वं स्वेन नवेन पत्या सह ससुख वस। अहं तु गच्छामि। अन्तिमवारं तु मामालप प्रिये!"

इत्थं हृदयान्तर्गतमेव विलपन्, स्यूतान्निस्सार्य तच्चित्र-

मवलोकयन्, पुनश्च हस्ताश्रयेण तद् वक्षसि संस्थापयन्, कपोलावश्रुभिरार्द्रीकुर्वन् स स्वमार्गस्य पथिको बभूव ।

    

( २३ )

प्रातरेकाऽश्रूयत करुणक्रन्दनम् ।

"हा ! पुत्र ! हा तुत्र ! कुत्र गतोऽसि ? हा ! आवां विहाय क्व पलायितोऽसि ? आवयोराश्रयस्तु त्वमेक एवाऽऽसीः ! कुत्र गतोऽसि ह्यः पलाय्य सन्ध्यातः ?"

"वत्स ! पश्य, पश्य, रोदिति तवेयं माता । एहि, पुत्र ! एहि । प्रोञ्छय तदश्रूणि । हा ! सर्वस्वं मे गतम् ।"

"पश्य, पुत्र ! पश्य, त्वया विना तवाऽयं तातः, अधिकं विह्वलोऽस्ति । वत्स ! नाऽऽवयोः केनापि किञ्चिदपभाषितन्तु ? पुनर्गतोऽसि कथमितः पलाय्य परिभ्रमणमिषेण । हा ! हतोऽहं मन्दभागी ।"

"मा रोदीः, मा रोदीः, आनन्दमातः ! द्वित्रैर्दिनैः सोऽवश्यमेवाऽऽगमिष्यति गृहम् । तूष्णीं भव भोः ! किञ्चिद् धैर्यमाश्रयस्व, लक्ष्मि ! मा रोदः, मा रोदः ।"

"अयमेव सहशिक्षायाः परिणामः । 'तस्यास्तु विवाहोऽद्य । गतस्तु मे पुत्रो गतः । किमन्यस्य प्रयोजनम् ? युवा पुत्र आसीत् । न जाने, क्व गतवान् ?"

"अधुना रोदनेन किम्? कथन्न कृतस्त्वया तस्य परिणयः शीघ्रम् ? मौनं कुरु भ्रातः ! रुदिहि न, रुदिहि न ।"

"तस्य विवाहे तज्जनकेनैव विलम्बः कृतो भगिनि !

अहं तु विमलया सह तं परिणेतुमुद्यतोऽभवम्, परं स तु कमलामेव कामयते स्म। पुनश्च किम्? तस्या एव प्रेम्णो वशादितः पलायितः सः। कथय, किमत्र कुर्याम्?"

"तदानीमस्य हस्ताहस्ति युद्धमभवद् भोः! पितृव्यजाये! तस्याऽयं परिणामो वधु! येन कमलया सह तस्य विवाहो न भूतः। विमलया सह तु विवाहः सम्भवति स्म, पर मिश्रपादानां विचारविलम्बतया सोऽपि न जातो भगिनि! हा! किमहं करवाणि?"

"मा रुदिहि, मा रुदिहि, आनन्दमातः! यदीश्वरः समीहते, तदेव भवति भगिनि! परमतिरोदनेन किं भवति? ह्यस्तु विमलाया अपि देहल्यां वाग्दान कृतं तज्जनकेन। किमित्थमविदित ते?"

"मया न ज्ञातम्। किं किं भवति संसारे? कस्यापि किञ्चिदनिष्टं न जातम्। मदीयमेव गृहं नष्टम्। न जाने, कदाऽऽगमिष्यति सः? पुत्र! शीघ्रमेहि, शीघ्रमेहि पुत्र! हा! हताऽहं हता मन्दभागिनी।"

इत्थमन्तर्द्वन्द्वेन क्रन्दन्ती साऽऽनन्दमाता बहुविधं विलपन्ती भूमौ पपात। प्रातरारभ्य सायं पर्यन्तं प्रतिवेशिमहिलानां तत्र गतागतमभूत् तीर्थेशभवने। कयाऽपि सान्त्वनमदायि। कयाचिदश्रूणि प्रोञ्छितानि। कयाचिच्च स्वरेण स्वरोऽपि सम्मेलितः। एकतः क्रन्दनमभूदन्यतश्च हर्षः। इयमेव संसारस्य विचित्रा गतिः।



# (२४)

अस्ति सायं समयः। रमेशस्य मनोऽधिकं प्रसन्नम्। स यथेच्छं कमलया सह विहरिष्यति। पुनरद्य विवाहोऽपि तस्य। अद्यतो भविष्यति कमला तस्य पत्नी। आनन्दाधिकारस्तु समाप्तिं गतः। तस्य पलायनवृत्तं सर्वैः कर्णपरम्परया विज्ञातम्। "गतः स परित्यज्य नगरम्, इति शुभं कृतमोशन" इति लालापत्तिनोक्तम्। "कण्टको नष्टः" इत्यभिहितं रमेश-जनकेन। किन्तु कमलाया हृदये किमस्ति? को नु जानीयात्? आनन्दस्य समक्षमेव रमेशः कमलां विवाहयितुमिच्छति स्म, तस्मादस्ति तस्य हृदये दुःखमपि। केनचित्—"पलायितः स इतः, शुभं जातम्", अन्येन—"पलायितः स मृतो न स्यात्, तस्येत्थं न कर्तव्यमासीत्", परेण—"अत्यशुभमापतितं भोः! अपरेण—"यद् भूतं तच्छुभमेव" इत्थं सर्वं यथारुचि व्यवहृतं, परं तन्मातापित्रोस्तु दुःखं न केनापि ज्ञातम्।

रमेशो वरोऽभूत् सज्जितमश्वमारूढः। वरयात्रा च पथि प्रवृत्ताऽऽसीत्। वरयात्रिष्वेव प्रायेण चर्चाऽभूत्—केनचिदुक्तं "भारतवाद्यमिदम्, इतः पूर्वं मया कदापि श्रुतमपि न" परेण—"हिन्दु-स्थानवाद्यं तु त्वया दृष्टमपि न" इति निगदितं; 'नृत्यमिदं तु कीदृशं सुन्दरं मनोहरं च भवति, रे मित्र! पश्य, पश्य" इत्यन्येनाभिहितम्; "पश्यामि, पश्यामि, मित्र! त्वं तावदित एहि मया सार्धम्" इतीतरेणोत्तरितम्।

वरयात्रिणो यदा श्रीवल्लभस्य निकेतनादधोमार्गेणाऽग्रे गताः, तदा तेषु कोऽपि नारीनृत्यमवलोकयितुं प्रवृत्तः, अन्यश्च नरनृत्यं द्रष्टुं दत्तचित्तोऽभवत्, इतरश्च धूमगोलकमीक्षितुं प्रवृत्तः। परं रमेशं वरं दृष्ट्वा विमलाया हृदयमन्तर्दग्ध्वा



भस्मीकृतमिवाऽभवत् ।"अनेन मया सह परिणयो न स्वीकृतः, पुनः कथमेनं पश्यामि ? किमस्योपरि विद्युत्पातो न भवति, येनाऽन्यस्य जीवनं नाशितम् । कमलामयं सर्वात्मना वाञ्छति परं न माम् । हे गङ्गे मातः ! यद्यस्य मनःकामना पूर्णा न भवेत्, तर्हि रूप्यैकस्य दुग्धधारां त्वयि प्रवाहयेयम् ।।" इत्थं सा बहुविधमक्रुशत् । वरयात्रा च शनैःशनैरापणचक्रं चरन्ती द्विवेदिनः स्वस्तिकसदनस्य द्वारं प्राप्नोत् ।

द्वारे श्रीगणेशपूजनमभवत् । पण्डितास्तत्र वैदिकमन्त्रपाठमकुर्वन् । तदनन्तरं यदानीमवादयद् रात्रौ घटिका नव, तदानीमेव प्रीतिभोजः प्रारभत । तद्दृश्यमतीव मनोरममभूत्, यत्र केचिज्जनास्तु मोदकान् भक्षयन्ति स्म, केचिच्च शष्कुलीरदन्ति स्म, परे माषगर्भाः, अपरे चाऽपूपान् खादन्ति स्म । अन्ये तु संयावस्वादम्, इतरे च विविधव्यञ्जनास्वादं गृह्णन्ति स्म । केभ्यो दधिवटिका रोचन्ते स्म परेभ्यश्च स्वदन्ते स्म पर्पटाः ! इतरे पिबन्ति स्म राज्यक्तमन्ये च शीतलजलम् । रात्रावेकादशवादनपर्यन्तं भोजनमभवत्, यत्सर्वैः प्रशंसितं किन्तु कमलया न किञ्चिद् भुक्तम् ।

ततो भ्रामरसमयात्पूर्वं महिलाभिः कमलायाः प्रसाधनं कृतम् । साऽद्य केशपाशे वेणीयुगलेन, शिरसि बालपाश्यया, ललाटे ललाटिकया, कर्णयोः कर्णिकाभ्याम्, ग्रीवायां देवच्छन्दग्रैवेयकेन, स्तनयोः कौशेयकेन चोलेन, करयोः केयूरकङ्कणवलयाङ्गुलीयकैः, श्रोण्यां रशनया, पादयोर्नूपुरकिङ्किणीभिरलङ्कृता, नासिकायां नासापुष्पेण, वक्षसि दुकूलशाटिकया, देहेऽधोभागे नवाम्बरेण महाधनेन कौशेयकेनाऽन्तरीयेण, स्कन्धयोश्च क्षौमेन संव्यानेन विभूषिताऽऽसीत् । परं

तस्या मुखं विनाऽऽनन्दं सूर्यास्ते कमलमिव मलिनमासीत् ।

वैवाहिककार्येषु संलग्ना माता मलिनमुखीं पुत्रीं वीक्ष्य सहर्षमुवाद—

"हर्षस्य समयोऽद्य कमले ! कथमियन्ते गतिः ?"

"शिरसि मे वेदना मातः !"

"तर्हि पुत्रि ! क्षणं सुप्त्वा विश्रामं कुरु, पुनस्तव ... पाणि— ग्र ह ण म्, अस्तु, तावद् गच्छ ।"

इति मातुर्वचनं श्रुत्वा सा मन्दगत्या स्वकक्षं प्रविश्य, द्वारं पिधाय, शयने क्षणं विरम्य, सर्वतो निरीक्ष्य यदा मञ्जूषामुदघाटयत्; तदा कानिचिद् दृश्याणि समक्षं क्रमशः समागतान्यपश्यत्—

"पाणिं माग्रहीः, माग्रहीः, आनन्द ! जानासि कियदस्य मूल्यं भवति ?"

"जानामि कमले ! नाऽधिकं मृत्युतः । त्वयि सर्वं विहास्यामि, परमद्य तव पाणिं गृहीत्वा नाऽन्यस्याः ग्रहीष्यामि । अधुना तु – – –, मां विहाय नाऽन्येन सह – – ,।"

"पूर्वन्तु – — –, आनन्द ! आवामन्योऽन्यस्य विरोधिनावास्व । इदानीं तु— — – ।"

"कथय कमले ! द्वयोः प्रेम सम्पन्नम् ।"

"आनन्द ! कियत्सुन्दरमद्य प्रतिभाति ?"

"कमले ! यदाऽऽवयोः समाजदृष्ट्यापि परिणयो भविष्यति, तदा कियत्सुखमयं जीवनं ——————, नैव भविष्यति कदापि क्षणिकविरहोऽपि ।"

"अद्य दुष्यन्तस्वरूपमवलम्ब्य भवान् सुन्दरतमो मां प्रतिभाति ।




"त्वदीयं शकुन्तलास्वरूपमवेक्ष्य मम मनसि न जाने किञ्चिज्जातम् ? तदागच्छ कमले ! ... मिदम् .. "

"किं करिष्यसि तत्र ?"

"प्रणयाभिनयेन जीवनानन्दं ग्रहीष्यावः। आगच्छ ..."

"करं न गृहाण, करं न गृहाण।"

"इदं करग्रहणं तु न, पाणिग्रहणम्। एहि कमले! लज्जां न कुरु।"

"अद्यतो मया पत्रेषु 'प्रियतम!' इति सम्बोधनीयम्, भवता च 'प्रिये!' इति। चित्रं तु सुरक्षितं मे ?"

"कथन्न ? निरन्तरं स्यूते तत् स्वरक्षां प्राप्नोति कमले !"

"भवदीय चित्रं कदा प्राप्स्यामि प्रियतम !"

"गृहाण मे चित्रं प्रिये ! सम्यक् सुरक्षणीयम्।"

इत्थं मानसिकविचारेषु स्वात्मानं क्रमशो निपातयन्ती, ततः किमपि पत्रे विलिख्य, किशोरगीतप्रतिलिपिमध्यान्निष्कासितं स्वप्रेमिणश्चित्रं दक्षिणकराश्रयेण वक्षसि निधाय, वामेन किञ्चिदन्यद् मुखे निक्षिप्य, 'सहजातं प्रेमाण त्वदीयमिच्छामि' इति मधुर सहगीतं संस्मरन्ती सुप्ता।

सम्प्राप्तः पाणिग्रहणसमयः। "कन्यां शीघ्रमानय" इति पण्डितः प्रोवाच। परमिदानीं कमला संसारे नासीदिति कोऽपि न जानाति स्म। लालापतिर्गृहं प्रविष्टः कमलामानेतुम्। "कुत्र कमला कुत्र ? सम्प्रति पाणिग्रहणस्य कालः" इत्थं द्विवेदिना निर्गदिता पद्मा तत्कक्षं गता, दशाञ्च दृष्ट्वा क्रन्दितुं सा प्रवृत्ता।

"हा पुत्रि ! हा पुत्रि ! त्वया किमित्थं कृतम् ? वत्से !

किमेतादृशी शिरोवेदना ते ? धावत, धावत रे ! मम पुत्री मृता कमला भोः ! पश्य, पश्य, कमलायाः पितः ! कथमिय मृता ते पुत्री ? अहो ! जाताऽहं निस्सन्ताना । लुण्ठितं हा ! सर्वं मे ।" इति करुणक्रन्दनमाकर्ण्य सर्वेऽपि दुःखमापन्ना द्रुत-गत्या धावन्तो जनास्तत्कक्षं प्राप्ताः । "हा ! सर्वोऽपि मे प्रयत्नो वृथा गतः" इति कथयता केनचिद् दृष्टिं प्रसारयता शय्यायामुपधानसमीपे पतितं पत्रमुत्थाप्य तत्रैव प्रापठ्यत —

पूज्यपितरौ !

सादरं प्रणतिः ।

मया यत्किञ्चित्कृतं तत्सर्वं क्षम्यम् । रमेशस्तु नाऽर्हो मच्छरीरमपि स्प्रष्टुं पुनः पाणिग्रहणन्तु दूरम् । कार्यस्याऽस्य योग्यः स आनन्द एवाऽऽसीत्, परमतिलेखेन किम् ? साम्प्रतिकौ तु पितरौ क्व कण्वगोतमीसदृशौ ? यौ दुहितृमनोभावानवगत्य तदिच्छानुकूलवर्तिनौ स्याताम् । अतो विस्मरतां माम् ।

भवत्पुत्री —

कमला ।

३१ — ३ — १९६१

    

इति रामकिशोरमिश्रविरचितोऽयमन्तर्दाहो नाम सामाजिक उपन्यासः परिपूर्णतामगात् ।



डॉ०

## कवेः प्रकाशिताः संस्कृतग्रन्थाः

१. काव्यकिरणावलिः उ.प्र. संस्कृताकादेमीतः पुरस्कृता ।
२. विद्योत्तमाकालिदासीयम् उ.प्र. संस्कृताकादेमीतः पुरस्कृतम्
३. श्रीगरुडध्वजसगादशतकम् उ.प्र.संस्कृताकादेमीतः पुरस्कृतम्
४. किशोरकथावलिः (कथासंग्रहः) ।
५. अङ्गुष्ठदानम् (नाटकम्) ।
६. बालचरितम् (गीतिकाव्यम्) ।
७. एकाङ्कावलिः (एकाङ्कनाटकसंग्रहः) ।
८. वसन्ततिलकम् (देवस्तुतिकाव्यम्) ।

## कवेरन्या संस्कृतरचनाः प्रकाशनद्वारे

९. त्यागपत्रनिरासम् (पुरस्कृतनाटकम) ।
१०. पत्नीत्यागम् (पुरस्कृतमेकाङ्कनाटकम्) ।
११. एकाङ्कमाला (एकाङ्कनाटकसंग्रहः) ।
१२. छन्दस्कलावती (छन्दः शास्त्रीयरचना) ।
१३. निबन्धबन्धः (निवन्धसंग्रहः) ।
१४. संस्कृत छन्दों का उद्भव तथा विकास (संस्कृतशोधप्रबन्ध)